श्री

# पञ्चस्तव्यां घटस्तवस्तृतीयः

विनिर्यान्ति यस्यां जगति भजते कर्मनिचयो
घटाविर्भूतायां किल पदतदर्थस्फुरणया ।
सरस्वत्यास्वाद्यानुपमरसकान्ताघटपरा
सदा भूयात् सा मे वचसि च चमत्कारबहुला ॥

नमः शारदाभगवत्यै ॥

अथ ग्रन्थकृत्परदेवताया अन्तर्बहिर्यागक्रमेण ध्यानादिचर्चां सफलां व्याचिकीर्षुस्तृतीयं घटस्तवमारभते । तत्राविघ्नेन परिसमाप्तिमाशंसमानस्तावद्विघ्नरक्षायै बहुधामन्त्रणेनोपास्यदेवतामभिमुखयति—

देवि ! त्र्यम्बककामिनि ! पार्वति ! सति ! त्रैलोक्यमातः ! शिवे,
शर्वाणि ! त्रिपुरे ! मृडानि ! वरदे ! रुद्राणि ! कात्यायनि ।
भीमे ! भैरवि ! चण्डि ! शर्वरि ! कले ! कालक्षये ! शूलिनि
त्वत्पादप्रणताननन्यमनसः पर्याकुलान्पाहि नः ॥ १ ॥

हे देवि ! विश्वसर्जनादिक्रीडापरे ! अर्थान्तराणि तु प्राग्वितत्य प्रदर्शितानि । त्रीण्यम्बकानि नेत्राणि यस्य स त्र्यम्बकः, तिस्रो भूम्यन्तरिक्षद्युलक्षणा अम्बा मातरः समुद्भूता यस्मादिति वा । यदाह वशिष्ठः—

तिस्रो देव्यो यतश्चैव तज्जाता लोकमातरः ।
द्यौरापः पृथिवी चेति तस्मात् त्र्यम्बक उच्यते ।।

यद्वा—त्रयाणां वेदानामम्बको वक्ता, त्रयाणां लोकानां गन्ता वा। अम्ब्र गतौ, अबि शब्दे इति धातुभ्यां ण्वल्प्रत्ययः ।

यद्वा—तिस्रोऽम्बाः शक्तयः इच्छादयो यस्येति! तत्पत्नि! तद्गृहिणि! पार्वति! पर्वतराजस्यापत्यं स्त्रीति हिमाचलतनये एतेन अनया सुपुत्र्यैव हिमाद्रिर्लोके पर्वतराजम्बस्य मान्यो ख्यातश्च समपद्यतेति सूचितम् । अत्र केचित्पर्वतस्येयमिति 'तस्येदं' इतीदमर्थेऽण्, न त्वपत्यार्थे । तदपवादस्येञः प्रसङ्गः । इञन्तत्वेऽपि 'इतो मनुष्यजातेः' इति मनुष्यजातिवाचित्वाभावान्न ङीप् इत्याहुः । तन्न, क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते इति समाधेयत्वात् । सति! दाक्षायणि! पतिव्रते! वा पत्येकपरायणे! पातिव्रत्यादेव भगवती दक्षयज्ञे निमन्त्रितसर्वदैवते स्वस्य पत्युः परीवादमात्रश्रवणमप्यसहमानामर्षात् पितुर्दक्षप्रजापतेरुत्पन्नं स्वशरीरं जहाविति पौराणिकी कथात्रानुसन्धेया । तथा त्रैलोक्यस्य त्रिलोक्या भूर्भुवः स्वर्लक्षणाया मातर्जनन्युत्पादयित्रीत्यर्थः । यद्वा—त्रैलोक्यस्य लक्ष्यमाणस्य परस्य सूक्ष्मस्य स्थूलस्य च प्रपञ्चस्योत्पत्तौ माता तज्जनिका, केचित्तु त्रैलोक्यं विद्याकूटत्रयं तदुत्पादिका माता वैखरीमध्यमादिभेदेनेत्याहुः। तदुक्तं 'चतुःशत्यां'—
'स्थूलसूक्ष्मविभेदेन त्रैलोक्योत्पत्तिमातृका' । इति

अतो मातृत्वादेव शिवयति क्षेमं करोतीति शिवा । शिवमस्यास्ति वा, यद्वा—शिवोऽस्ति भर्तृत्वेन यस्या इति तदामन्त्रणं शिवे! इति, न तु शिवस्य पत्नीति तत्र पुंयोगलक्षणे ङीषि शिवीति स्यात् । शृणाति सृष्टस्य सृज्यवस्तुनो यथाकालं हिनस्ति संहरतीति शर्वस्तस्य स्त्री शर्वाणी संहारिणीशक्तिरित्यर्थस्तत्सम्बुद्धिः शर्वाणि! यद्वा—अष्टमूर्तेः परशिवस्य क्षितिमूर्तिः शर्वेति संज्ञयाम्नाता तस्य स्त्रीति पुंयोगलक्षणेऽर्थे ङीष् आनुगागमश्च । भौमग्रहजननी नाम्ना सुकेशीति च । तदुक्तं 'लैङ्गे'—

चराचराणां भूतानां धाता विश्वम्भरात्मकः ।
शर्व इत्युच्यते देवः सर्वशास्त्रार्थपारगैः ।।
विश्वम्भरात्मनस्तस्य शर्वस्य परमेष्ठिनः ।
सुकेशी कथ्यते पत्नी तनुजोऽङ्गारकः स्मृतः ।।

इति

'वायवीये'—

> शर्वस्य या तृतीया तु नाम्ना भूमीतनुः स्मृता ।
> पत्नी तस्य सुकेशीति पुत्रश्चाङ्गारको मतः ।। इति ।

तथा त्रिभ्यो ब्रह्मादिभ्यः पुराः पूर्वभूतत्वात्त्रिपुरा, त्रिपुरापदव्युत्पत्तिर्वराहपुराणे—

> 'ब्रह्मविष्णुमहेशाद्यैस्त्रिदशैर्रचिता पुरा ।
> त्रिपुरेति तदा नाम कथितं दैवतैस्तव'।। इति ।

यद्वा—त्रिभ्यो वेद्यवित्तिवेदितृभ्यः, स्थूलसूक्ष्मपरेभ्यः, पश्यन्त्यादिवाग्भ्यो, जाग्रदादिभ्यो दशाभ्यः, सूर्यादिप्रकाश-लोक-प्राण-स्थान-गुण-नाडीयान-विभाग रहस्याख्येभ्यश्च पुराभूतत्वात् त्रिपुरेत्युच्यते । यदुक्तम्—

> त्रिमूर्तिसर्गाच्च पुरोभवत्वात् त्रयीमयत्वाच्च पुरैव देव्याः ।
> लये त्रिलोक्या अपि पूरकत्वात्प्रायोऽम्बिकायास्त्रिपुरेति नाम ।।

'चतुःशत्यामपि'—

> 'स्वसंवित्त्रिपुरा देवी' इति ।

मृडेति स्वभक्तान्सुखयतीति मृडः, मृड्णात्यनिष्टं क्षुणत्तीति वा मृडः परमशिवस्तस्य स्त्री भोगैश्वर्यादिना सुखयित्री तस्या आमन्त्रणम् । वरं वरणीयं संभजनीयं भोगं मोक्षं तदुभयं वा ददाति, वरं श्रेष्ठमनुत्तराकुलाख्यं शिवपदं भक्तेभ्यो ददातीति वा । हे वरदे! 'शैवी मुखमिहोच्यते' (वि०भै० २० श्लो०) इत्युक्त्या शक्त्युपासनाद्वारेणैवोपेयशिवीभवासादनस्याभिहितत्वात् । यदुक्तम्—

> 'यथालोकेन दीपस्य किरणैर्भास्करस्य वा ।
> ज्ञायते दिग्विभागादि तद्वच्छक्त्या शिवः प्रिये'! ।। वि०भै०२१ ।।

इति

तथा रोदयति दैत्यानाक्रन्दयतीति, संसाररुजां द्रावणाच्च रुद्रस्तस्य स्त्री रुद्राणी दैत्यानां क्रन्दयित्री जन्मादिरोगशमनी च तत्सम्बोधनं रुद्राणि! तथा कात्यायनि! शुम्भादिदैत्यमथनि!, कतनामकस्यर्षेरपत्यं स्त्रीत्यर्थे गर्गादित्वाद्यञि कात्यः

'सर्वत्र लोहितादिकतन्तेभ्यः' इति ष्फः, षित्वात् ङीष् । समस्तसुराणां तेजः-पुञ्जस्वरूपत्वात् देव्याः संज्ञेयम् । तदुक्तं 'वामनपुराणे'—

तच्चापि तेजो वरमुत्तमं महत्—
नाम्ना पृथिव्यामभवत्प्रसिद्धम् ।
कात्यायनीत्येव तदा बभौ सा
नाम्ना च तेनैव जगत्प्रसिद्धा ॥

इति

उड्याणपीठाभिमाननीयम् । तदुक्तं 'कालिकापुराणे'—

'कात्यायनी चोडियाने' ।

'देवीपुराणे तु'—

कं ब्रह्म कं शिरः प्रोक्तमुरुमसारं च कं मतम् ।
धारणाद्वासनाद्वापि तेन कात्यायनी मता ॥ इति,

बिभ्यत्यसुरा यस्या इति भीमा, तदुक्तं 'सप्तशत्याम्—'

पुनश्चाहं यदा भीमं रूपं कृत्वा हिमाचले ।
रक्षांसि भक्षयिष्यामि मुनीनां त्राणकारणात् ॥
तदा मां मुनयः सर्वे स्तोष्यन्त्यानम्रमूर्तयः ।
भीमादेवीति विख्यातं तन्मे नाम भविष्यति ॥ ११।५०-५१

इत्यतो भीमेऽसुरघातिनि ! इत्यर्थः, तथा भीरूणामभयप्रदत्वाद्भरणरवणवमनस्वभावत्वाच्च भैरवस्तस्येयं शक्तिर्भैरवी तत्संबोधनं भैरवि ! पराशक्ते !; यद्वा—भरणरवणवमनकरणशीलत्वात्सर्गस्थितिसंहारकारी भैरवः परशिवस्तस्येयं पूज्यत्वेनेति भैरवी । 'तदुक्तंपाद्मे'—

'शम्भुः पूजयते देवीं मन्त्रशक्तिमयीं शुभाम् ।
अक्षमालां करे कृत्वा न्यासेनैव भवोद्भवः' ॥ इति ।

यद्वा—भैरवी मुद्रारूपा, सा चान्तर्बहिर्भावयोगपद्येन पूर्णसंवित्स्वभावा । यदुक्तम्—

شبنوں دیویاحیں سے پیدا ہوئی ہیں جو حکیت کی مانند
یعنی آکاش جل - اور پرتھوی کا جو سرجن کرتا ہے
اُسے نترمیک کہتے ہیں - شبنوں وید و ناد کے سلم
مجید کا پیدا کرنے والا یعنی کہنے والا - یا پرن ہوکہ
جو شبنوں کو کہوں ہیں کیا ہے یعنی ویاپت ہے یعنی
سب کچھ میں ویاپت ہے - رنیر ارتھ [illegible]
دھاتی کو ۲ دھار [illegible] ہے
اسکے علاوہ شبنوں شکتیوں اچھیا گیان کریا
کا جو کا وہ اسوا یعنی سوامی ہے - یعنی جو ان کا
مالک ہے - انکی پتنی یعنی گھروالی جو ہے
پاروتی - پیروت راج یعنی ہماچل کی جو بیٹی
ہے - یعنی جو ہماچل پیروت راج سے پیدا ہوئی ہے

अन्तर्लक्ष्यो बहिर्दृष्टिर्निमेषोन्मेषवर्जितः ।
इयं सा भैरवीमुद्रा सर्वतन्त्रेषु गोपिता ॥

इयं निमीलनोन्मीलनयोः समाध्योः सामरस्यात्मा । यच्चोक्तं महेश्वरानन्दगुरुभिः—

स्तब्धदृष्टिबहिरर्थसंश्रयं निर्विकल्पमपि यत्तवासनम् ।
मुक्तपञ्जरशुकानुकारि तद्भैरवं वपुरुदारमाहर ॥

इति
अथ च भैरवोऽखिलशक्तिभरितस्तदुक्तम्—

संविदेकात्मतानीतभूतभावपुरादिकः ।
अव्यवच्छिन्नसंवित्तिर्भैरवः परमेश्वरः ॥

'शिवसूत्रेष्वपि'—उद्यमो भैरवः । (१-५)
'वार्तिकेऽपि'—उद्यमोऽन्तः परिस्पन्दः पूर्णाहंभावनात्मकः* ।
स एव सर्वशक्तीनां सामरस्यादशेषतः ॥
विश्वतो भरितत्वेन विकल्पानां विभेदिनाम् ।
अलं कवलनेनापीत्यन्वर्थादेव भैरवः ॥ शि०स०वा०-१।३४-३५

इति । 'श्रीविज्ञानभैरवेऽपि'—
अन्तः स्वानुभवानन्दा विकल्पोन्मुक्तगोचरा ।
यावस्था भरिताकारा भैरवी भैरवात्मनः ॥
तद्वपुस्तत्त्वतो ज्ञेयं विमलं विश्वपूरणम् ॥ १५,१६ ॥ इति ॥

भयङ्करत्वाद्भैरवः सर्वनियन्ता वा । 'भीषास्माद्वातः पवते' इति (तैत्ति० २।८), 'महद्भयं वज्रमुद्यतम्' (कठो० ६।२) इत्यादिश्रुतौ समुपन्यस्तस्य भयङ्करत्वस्य परब्रह्मलिङ्गभावेन कम्पनाधिकरणे विवृतत्वात् । तथा चण्डते दैत्येभ्यः स्वभक्ता बह्वादित्वात् ङीष् तदामन्त्रणं चण्डि ! दैत्यद्वेषिभ्यो वा कुप्यतीति चण्डा कोपने !, तथा शृणाति समरेषु दैत्यानामस्त्रशस्त्राणि संहरति तान् हिनस्तीति वा शर्वरी तदामन्त्रणं शर्वरि ! कलयति विश्वमन्तः स्थितमक्षचक्रेश्वरीभिर्बहिर्भासयति, बहिर्भासितमपि स्वात्मैक्यात्म्येन चावभासयतीति कला स्वातन्त्र्यरूपा शक्तिस्तत्संबुद्धिः कले ! एतत्कलनं पञ्चकृत्योपलक्षणम् । यद्वा विश्व-

* भावनात्मकः का०

वैचित्र्योल्लेख शिल्पशक्ते !, कलनात्मिके वा ! यद्वा अग्नीषोमस विमर्शशक्तिर्बिन्दुसमष्टिरूपा महात्रिपुरसुन्दरी कामकलेत्युच्यते । एतस्य ख्यानं प्राक् कृतं । अग्रेऽपि प्रकारान्तरेण व्याख्यास्यते । तथा कालस्य भै क्षये ! निवासाधारभूते ! अथवा कालस्य परार्धात्मकस्य क्षयो विलयो मुन्मनाख्यायां शक्तौ सा, हे अकालकलिते ! इत्यर्थः । समनापर्यन्तस्य कलिततया विनाशित्वात् । तथा हे शूलिनि ! त्रिशूलायुधधारिणि ! अत्रेच्छा रात्रयात्मशक्त्यारोहेण विश्वावभासिनीति रहस्यार्थो बोध्यः । त्वत्पादयो चरणयोः प्रणतान् प्रह्वीभूतान्, अथवा त्वत्पादौ प्रणतान्प्रणमतः अनन्यम स्तत्रैकतानवृत्तीन्नोऽस्मान् यतः पर्याकुलानाधिव्याधिभिर्विक्षिप्तान् अत रक्ष । प्रार्थनायां लोट् । अत्र बहुषु सम्बोधनपदेष्वभिधीयमानेषु भक्त तत्तदनेकसंभाव्यमानकार्यावसरे स्वाभिमुखीकरणतत्तत्कार्यनिर्वहणपालनाद्य प्रायो बोध्यः । चरणसंकेतस्तु देशिकसकाशादधिगम्यः रहस्यत्वान्न न्मील्यते ॥ १ ॥

अथ प्रणामोपक्रमसमर्चादिकं प्रतिफलतयाऽभिवृहयन्नाह—

देवि ! त्वां सकृदेव यः प्रणमति क्षोणीभृतस्तं नम—
न्त्याजन्मस्फुरदङ्घ्रिपीठविलुठत्कोटीरकोटिच्छटाः ।
यस्त्वामर्चति सोऽर्च्यते सुरगणैर्यः स्तौति स स्तूयते
यस्त्वां ध्यायति तं स्मरार्तिविधुरा ध्यायन्ति सिद्धाङ्गनाः ॥ २ ॥

हे देवि ! सकृदेकवारमेव यः साधकजनस्त्वां प्रणमति कायेन मनसा भि स्त्वदेकप्रवणतयाऽभेदेन समाविशति, तं त्वत्समावेशैकरसिकं भक्तिमन्तं जनं यावज्जीवं, अत्र जन्मशब्देन जीवनकालो लक्ष्यते तेनाजीवनकालमित्य क्षोणीभृतो महीपाला नमन्ति, पादयोः प्रसादाकांक्षया प्रणता भवन्ति । स्फुरन्त्यो विलसन्त्योऽङ्घ्रिपीठे पादपीठेऽर्थाद्भक्तिमतो विलुठन्तो स्खलन्तो टी रांणां मुकुटानां कोटिच्छटाः प्रान्तभागरुचयो येषां तथाविधाः, एतेन तद्विधेयताभिहितेत्यर्थः । एवं यस्त्वामर्चति त्वत्सपर्यां विधत्ते स सुरगुणैरि दि देवनिकरैरर्च्यते पूज्यते । यद्वा कौलिकयागक्रमेण जागरादिषु पञ्चस्ववस्था क्रमेण भेदहानिरुन्मेषोदय इत्यतो जाग्रति समस्तं मन्त्रवृन्दं स्वप्ने आरिरा पितमेकमेव, सुषुप्ते परादिशक्तिसहितं भैरवत्रयं कुलेश्वरी च, तुर्ये कुलेश्व कं-

वेत्येवं वा कौलिक्यार्चया पूर्णस्वातन्त्र्याधिरूढिपर्यवसानया योऽर्चति, स तादृक् कुलेश्वरः सर्वैर्देवैर्द्योतनादिसतत्त्वैः करणेश्वरीवर्गैरर्च्यते समाश्रीयते पूर्णाहम्भाव-प्रथां नीयते इत्यर्थः । येन तस्य परादेवीस्वरूपप्रथनमवभासमानं स्यात् । तदुक्तमा-चार्यपादैः—

सर्वं जाग्रति कर्तव्यं स्वप्ने प्रत्येकमन्त्रगम् ।
निर्वाय सुप्ते मूलाख्यः स्वशक्तिपरिबृंहितः ॥
तुर्ये त्वेकैव मूलाख्या तदतीते कुलेशिता ।
स्वशक्तिपरिपूर्णानामित्थं पूजा प्रवर्तते ॥

इति । यस्त्वां स्तौति स्तुतिं करोति, देव्याः सुचरितसूचकानि नामभिः कीर्तयति, कीर्तनं च कलिमलकलङ्कजन्यदोषस्य स्वधर्मानुष्ठानाङ्गवैकल्यस्य सन्ध्यावन्द-नादिप्रधाननित्यादिकर्मलोपस्य च निवृत्तिफलकमागमेषु प्रसिद्धम् । 'स स्तूयते सुरगणैरि'त्यनुषज्यते । तथा त्वां यः साधको ध्यायति ध्यानोल्लेखनपूर्वं हृदि चिन्तयति । तं स्मरार्त्या मदनज्वरेण दशविधेन नयनप्रीत्यादिना विधुरा विकला सिद्धानां देवजातीनामङ्गनाः स्त्रियो योगिन्यो ध्यायन्त्यतिशयप्रौढोल्लासवत्यो हि ता निरन्तरोन्मिषितमदनावस्थावैकल्यभाजस्तच्छान्त्यर्थं तद्ध्यानोपायं परिशीलयन्तीत्यर्थः । सिद्धेत्युपलक्षणं सुरादीनाम् । तदुक्तमाचार्यपादैः 'प्रपञ्च-सारे'—

ससुरासुरसिद्धयक्षविद्याधरगन्धर्वभुजङ्गचारणानाम् ।
प्रमदा मदवेगतो विकीर्णाभरणाः स्रस्तदुकूलकेशजालाः ॥
अतिदुःसह मन्मथव्यथाभिर्व्यथितान्तःपरितापवेपिताङ्ग्यः ।
घनघर्मजतोयबिन्दुमुक्ताफलसक्तोरुकुचान्तबाहुमूलाः ॥
रोमाञ्चकञ्चुकितगात्रलताघ गोद्यदुत्तुङ्गपीनकुचकुम्भनिपीडितांग्यः ।
औत्सुक्यभारपृथुवेपथुखेदखिन्नपादारविन्दचलनस्ख[1]लिताभिधाताः ॥
(९प्र०।२३, २४, २५)

---

1. "स्खलिताभियाताः" इति वा पाठः ।

मारसायकनिपातदारिता रागसागरनिमग्नमूर्तयः ।
श्वाससम्भ्रमतरङ्गिताधरा बाष्पपूरभरविह्वलेक्षणाः ॥
मस्तकारचित दोर्द्वयाञ्जलिप्राभृता ह²रिणशावलोचनाः
वाञ्छितार्थकरणोद्यताश्च तद् दृष्टिपातमपि सं³भ्रमन्ति ताः ॥
(९ १८०।२६, २७)

इति । दशविधा मदनावस्थास्तु—

नयनप्रीतिः प्रथमं चित्तासङ्गस्ततोऽथ संकल्पः ।
निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः ।
उन्मादो मूर्च्छा मृतिरित्येता स्मरदशा दशैव स्युः ।

इति । अत्र प्रथमाभ्यां वाक्याभ्यां कायीयसपर्यापराभ्यां वाचिकी मानसिकी चेति बोध्यम् ॥ २ ॥

एवं ध्यानव्यापारफलं प्रपञ्चन् ध्यातुर्दव्यात्मभावेन तद्रश्मिसमूहावर्जनसामर्थ्यमुपजायत इत्याशयं प्रकटयन्नाह—

उन्मत्ता इव सग्रहा इव विषव्यासक्तमूर्च्छा, इव
प्राप्तप्रौढमदा इवातिविरहग्रस्ता इवार्ता इव ।
ये ध्यायन्ति हि शैलराजतनयां धन्यास्त एकाग्रत—
स्त्यक्तोपाधिविवृद्धरागमनसो ध्यायन्ति वामभ्रुवः ॥ ३ ॥

उन्माद्यन्ति स्मेत्युन्मत्ताः "गत्यर्थाकर्म" इत्यनेन कर्तरि क्तः, उन्मादो वातकृतश्चित्तविभ्रमस्तद्युक्ता इव, यद्वा 'मदीहर्षे' इति धात्वर्थत्वानुगमादुन्मत्ता उद्गतहर्षातिशया इव 'आनन्दे महति प्राप्ते' इत्युक्तेः । तथा ग्रहाः पूतनारूपिकादयस्तैः सह वर्तन्त इति सग्रहा भूतादिग्रहाभिभूतस्तदाविष्टा इव बाह्यार्थविषयज्ञानविरहिता इत्यर्थः । तथा विषेण धत्तूरादिना कृत्रिमाकृत्रिमरूपेण व्यासक्ता संजनिता मूर्च्छा मोहोऽन्तारूपसमुच्छ्रायविधेयत्वं येषां ते मूर्च्छिता इव, अत्र

---

2. "निभृतशावलोचनाः" इति वा मु० पाठन्तराणि ।
3. "संत्रसन्ति" इति वा मु० पाठः ।

मूर्च्छा शब्दस्य वैचित्यं नार्थस्तथात्वे ध्यानव्यापारासम्भवात्। तथा प्राप्त आसादितः प्रौढः प्रवृद्धो मदो मादो हर्षो यैस्ते प्राप्तप्रौढमदाः भैरवद्रव्योपयोगेनासादित प्रौढोल्लासाः परभैरवस्वरूपाविष्टत्वात्कौलिक्य इव । तदुक्तं 'कुलार्णवे'—

स्खलनं दृङ्मनोवाचां प्रौढ इत्यभिधीयते ।

तथा—

समर्पयन्ति ये भक्ता आवाभ्यां पिशितासवम् ।
उत्पादयन्ति चानन्दं मत्प्रियाः कौलिकाश्च ये ॥
आवयोः परमाकारं सच्चिदानन्दलक्षणम् ।
कुलद्रव्योपयोगेन परिस्फुरति चान्यथा ॥
अन्तःस्यानुभवोल्लासो मनोवाचामगोचरः ।
कुलद्रव्योपभुक्तेन जायते नान्यथा प्रिये! ॥
सेविते च कुलद्रव्ये कुलतत्त्वार्थदर्शनम् ।
जायते भैरवावेशः सर्वत्र समदर्शनः ॥

इत्यादि । तयाऽन्निविरहेण प्रियजनस्य चिरकालं वियोगेन ग्रस्ता अवहेलिता इव प्रियदर्शनसमुत्सुकितयात्यन्तरागेणान्तर्वहिस्तद्विभ्रमाभासवत्य इवेत्यर्थः । यदभिप्रायेण स्तुतमुपमन्युना 'बिरहीव विभो प्रियामयं ननु पश्यामि भवन्मयं जगत्' इति । तयातिघोरसिंहाद्युपद्रवोपनिपातवशेनार्ताः क्लेशिता इव, ते हि चकितमुद्रानुप्रवेशात् झटिति सामान्यस्पन्दपदवीमधिरूढाः संपद्यन्ते तादृशा इव, विगलितवेद्यान्तराभासतयाऽविकल्पस्वानुभवामृतरसार्णवमग्ना इत्यर्थः । एतदुक्तं भवति—विजातीयवेद्यान्तरप्रत्ययनिमज्जनपूर्वं सजातीयस्वात्माभिन्नसकलनिष्कलान्यतरपरदेवताप्रत्ययप्रवाहरूपं ध्यानमेव षड्भिरेभिरुपमितैर्विशेषणैरुपोद्वलितमितिध्यानव्यापारो विवृत इति । एवं हि ये साधकाः शैलराजस्य हिमालयस्य तनयां पुत्रीं परदेवतां ध्यायन्ति 'शुद्धविद्योदयाच्चक्रेशत्वसिद्धिः' (शि०सू०१।२१) इत्युक्तयुक्त्या स्वाभेदतया भावयन्ति, ते धन्या भोगमोक्षोभयात्मकं विश्वात्मकस्वशक्तिचक्रेश्वरत्वरूपमाहेश्वर्य लक्षणं वा धनं, पूर्णाहन्तात्मकपरदेवतासमावेशलक्षणं ज्ञानं वा लब्धारो भवन्ति । न तु निर्विमर्शं पाषाणप्रायं ब्रह्मेत्यर्थः । तदुक्तं 'कुलार्णवे'—

ध्यानं तु द्विविधं प्रोक्तं स्थूलसूक्ष्म प्रभेदतः ।
साकारं स्थूलमित्याहुर्निराकारं तु सूक्ष्मकम् ॥

स्थि[1]रात्ममनसः केचित्स्थूलध्यानं प्रचक्षते ।
स्थूलेन निश्चि[2]तं चेतो भवेत्सूक्ष्मेऽपि सुस्थिरमिति ।।
करपादोदरा[3]द्यास्यरहितं पारमेश्वरम् ।
सर्वतेजोमयं ध्यायेत्सच्चिदानन्दलक्षणम् ।।
नोदेति नास्तमभ्येति न वृद्धिं याति न क्षयम् ।
स्वयं विभात्यथान्यानि भावयेत्साधनं विना ।।

इति, (कुलार्णव: ०९।३०९)
तथा—

एवं न्यस्ततनुर्देवि! ध्यायेद् देवीमनन्यधीः ।
अमृतार्णवमध्योद्यन्मणिद्वीपे सुशोभिते ।।
कल्पवृक्षवनान्तःस्थनवमाणिक्यमण्डपे ।
नवरत्नमयश्रीमत्सिंहासनगतेऽम्बुजे ।।
त्रिकोणान्तःसमासीनं चन्द्रसूर्यसमन्वितम् ।
अर्धाम्बिकासमायुक्तं प्रविभक्तविभूषणम् ।।
कोटिकन्दर्पलावण्यं सदा षोडशवार्षिकम् ।
मन्दस्मितमुखाम्भोजं त्रिनेत्रं चन्द्रचूडकम् ।।
दिव्याम्बरस्रगालेपं दिव्याभरणभूषितम् ।
पानपात्रं च चिन्मुद्रां त्रिशूलं पुस्तकं करैः ।।
विद्यासंसिद्धिं बिभ्राणं सदानन्दमुखेक्षणम् ।
महाषोढोदिताशेषदेवतागणसेवितम् ।
एवं चित्ताम्बुजे ध्यायेदर्धनारीश्वरं विभुम् ।
पुंरूपं वा स्मरेद् देवि! स्त्रीरूपं वा विचिन्तयेत् ।।
अथवा निष्कलं ध्यायेत्सच्चिदानन्दलक्षणम् ।
सर्वतेजोमयं देवि! सचराचरविग्रहम् ।।

इत्येवमनुत्तरोर्ध्वाम्नायक्रमोक्तं ध्यानम् । आम्नायान्तरोक्तं ध्यानं तु—

ततः पद्मनिभां देवीं बालार्ककिरणारुणामित्यादिज्ञेयम् । तथा विवृद्ध उपबृंहितो रागो विशुद्धप्रीतिलक्षणो यस्मिंस्तादृशं मनश्चित्तं यासां ताः शुद्ध-

१. स्थिरार्थं । २. निश्चयम् । ३. पादोदरस्यादि इति मु० पु०पाठान्तराणि ।

भावनोपेता वामभ्रुव आभुग्नभ्रूलताविलासवत्यः कामिन्यो देवीरश्मिरूपास्त्यक्तो निरस्त उपाधिः पाशववासनाजन्योपभोगादिकलङ्को यत्र तथेति क्रियाविशेषणमव्ययम् । ध्यायन्ति । विभक्तिविपरिणामेन तानित्यध्याहार्य, स्मरणव्यापारेण तेषु स्निग्धानुकूलहृदया भवन्तीत्यर्थः । यद्वा—स्वस्वामिनीरूपसादृश्येन विमृशन्तीति । यद्वा—उन्मत्ता इवेत्यादि षट्विशेषणानि वामभ्रुव इत्यनेन योज्यानि ॥ ॥ ३ ॥

अधुना ध्यातुरपि ध्येयभावासादनेनालौकिकभावं दर्शयन् ध्यानफलं प्रपञ्चयति—

ध्यायन्ति ये क्षणमपि त्रिपुरे! हृदि त्वां
लावण्ययौवनधनैरपि विप्रयुक्ताः ।
ते विस्फुरन्ति ललितायतलोचनानां
चित्तैकभित्तिलिखितप्रतिमाः पुमांसः ॥ ४ ॥

हे त्रिपुरे! महात्रिपुरसुन्दरि! "त्रिभ्यस्तेजोभ्यः पुराभूता त्रिपुरेति निरुच्यते" इति सूर्यादिप्रकाशसामान्यरूपा स्वप्रकाशा परादेवता । यदुक्तं 'काण्वे'—

'तद् देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम् ।' इति । (बृह० ४।४।१६)

'कठोपनिषदि'—

न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति । (कठो० ५।१५)

'स्मृतिश्च'—

न तद्भासयते सूर्यो न शशाङ्को न पावकः ।
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥ (भ०गी० १५।६) इति ।

'श्रीमदाचार्याभिनवगुप्तपादाः'—

यत्र सूर्यो न वा सोमो नाग्निर्भासयतेऽपि च ।
न चार्कसोमवह्नीनां तत्प्रकाशाद्विना महः ॥
किमप्यस्ति निजं किन्तु

इत्येतत्प्रागेव वितत्य बहुशो निरुक्तम् । ये साधकाः क्षणमप्यत्यल्पकालमिति यावत् कामकलात्मिकां त्वां स्वाभिन्नत्वेन हृदि चेतसि ध्यायन्ति समाविशन्ति । ध्यानस्य ध्येयैक्यपरमार्थपर्यवसायित्वश्रवणात् येन ब्रह्मभूयं प्राप्ताः सर्वज्ञकल्पा भवन्ति । तदुक्तम्—

यथा निमीलने काले प्रपञ्चं नैव पश्यति ।
तथैवोन्मीलनेऽपि स्यादेतद् ध्यानस्य लक्षणम् ॥
जनः स्वदेहकण्डूतिं विजानाति यथा तथा ।
परब्रह्मस्वरूपी च वेत्ति विश्वविचेष्टितम् ॥ इति ।

तथा श्रुतिः—'परं धाम त्रैपुरं चाविशन्ति' । 'ब्रह्मविद् ब्रह्मैव भवति' । 'स वा एष एवं पश्यन्नेव मन्वान एवं जानन् आत्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स एव भवतीति' । तथा 'स्पन्दे—'

'यदा त्वेकत्र संरूढस्तदा तस्य लयोद्भवौ ।
नियच्छन् भोक्तृतामेति ततश्चक्रेश्वरो भवेत्' ॥ (नि० ४।२१) ।

इति—

ते कामकलोपासकाः पुमांसो ललिते रत्युद्बोधकविलासविशेषवती आयते विशाले लोचने नेत्रे यासां तासां कामिनीनां चित्तेषु चेतोरूपास्वेकभित्तिषु आलेख्याधारभूतमुख्यप्राकारेषु लिखितारचित्रिताः प्रतिमाः प्रतिच्छाया येषां तादृशा विस्फुरन्ति चकासते इत्यर्थः । कीदृशाः—लावण्यं नाम नेत्राद्यवयवसन्निवेशरचनाविलक्षणं प्रतीयमानं वस्त्वन्तरं सौन्दर्यं, 'यदुक्तमानन्दवर्धनाचार्यैः'—

प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।
यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु ॥ ध्व०का०४

इति । यौवनं शरीररूपादिशोभाधायिका युवावस्था । धनं सुवर्णालङ्कारादिद्रव्यजातं एतैर्व्यस्तसमस्तैर्ललनाकर्षणप्रलोभनादिनिमित्तैर्विप्रयुक्ता रहिता अपि । अत्रापि शब्देन तेषु कामिनीनां रागासंभव इति द्योत्यते । लावण्यादिवियुक्तत्वेऽपि त्वद्रूपसमाविष्टत्वेन संजातापूर्वसौन्दर्याणां तेषां वशीकारित्वं वशीकारसंपदित्याशयः । अतः कारणं विनैव कार्योत्पादाद्विभावना । एवमेतद्ध्यस्मरणध्यानफल-

चर्चात्मकं सिद्धमन्त्रस्यैव प्रयोगापेक्षमेवं सर्वत्र ज्ञेयम् । अपि शब्दो भिन्नक्रमः । अभेदभावनाया माहात्म्यमिदम् । तदुक्तम्—

स्वदेहोद्भूताभिर्घृणिभिरणिमाद्याभिरभितो,
निषेव्यां नित्ये! त्वामहमिति सदा भावयति यः ।
किमाश्चर्यं तस्य त्रिनयनसमृद्धिं तृणयतो
महासंवर्ताग्निर्विरचयति नीराजनविधिम्' ॥

तथाच—

अरुणां करुणातरङ्गिताक्षीं धृतपाशाङ्कुशबाणचापहस्ताम् ।
अणिमादिभिरावृतां मयूखैरहमित्येव विभावयेद्भवानीम् ॥

इति । कामकलामहिमा तु 'मुखं बिन्दुं कृत्वा' इत्यादिश्लोके सौन्दर्यलहर्यामाचार्य-पादैर्वर्णितः । भेदोपासना त्वागमेषु गर्हिता श्रूयते—'यो[१]ऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहं न स वेद यथा पशुरिति श्रुतेः' (बृह० १।४।१०) ॥ ४ ॥

ध्यातारं प्रति प्रलोभितया शक्तिवर्गस्य समावेशं विकल्पाननुवदन् ध्यानमाहात्म्यमेवाह—

एतं किं नु दृशा पिबाम्युत विशाम्यस्याङ्गसङ्गैर्निजैः
किं वामुं निगलाम्यनेन सह वा किं वैकतामाश्रये ।
तस्येत्थं विवशो विकल्पघटनाकूतेन योषिज्जनः
किं तद्यन्न करोति देवि! हृदये यस्य त्वमावर्तसे ॥ ५ ॥

स्वरूपगोपनात्मकातिदुर्घटकारित्वलक्षणशुद्धस्वातन्त्र्यात्स्वात्मनो ग्राह्य-ग्राहकतोल्लासत्वेन विश्वावभासनात्मकीडाद्यसतत्त्वे द्योतनादिस्वरूपे वा हे देवि! परदेवते! परमशिवाभिन्ने! 'यदागमः'—

न शिवेन विना शक्तिर्न शक्तिरहितः शिवः ।
नानयोरन्तरं चास्ति मारुताम्बरयोरिव ॥

---

१. (अथ) योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽस्मीति ।
२. 'ललिताकृतेन' इतिपाठान्तरम् ।

इति ।

तथा—

किन्तु दुर्घटकारित्वात्स्वाच्छन्द्यान्निर्मलादसौ ।
स्वात्मप्रच्छादनक्रीडापण्डितः परमेश्वरः ।। इति ।

यस्य साधकस्य शक्तिपातपवित्रितहृदयस्य हृदये चेतसि त्वमावर्तसे आतिष्ठस्यनवरतमाभासीत्यर्थः । तस्येत्थमेवं वक्ष्यमाणप्रकारेण विवशः पारवश्येनावस्थितो योषिज्जनोऽणिमादिरश्मिनिकरो विकल्पानां संशयोत्प्रेक्षानिश्चयादीनां वितर्कज्ञानानां धटना योजना तद्युक्तेनाकूतेनेङ्गितादिना हृद्गतभावाविर्भावकेण यत्साधकतादात्म्यावस्थानादिविकल्पलक्षणं न करोति । किं तत्र किञ्चिदित्यर्थः । तत्प्रकारमाह—एतमिति—एतं पुरो दृश्यमानं दृशा दृष्टयान्तर्भासितैतत्प्रतिच्छायया करणेन किं नु पिबामि ? स्वान्तरवस्थापयामि ? । उताहोस्विन्निजैरङ्गैः स्वीयैश्चक्षुरादिकरणैः सहास्याङ्गं विशामि प्रत्यङ्गमैक्येन संयोजयाम्याविशामीत्यर्थः । किं वोताप्यमुं विप्रकृष्टस्थाने बहिराभासमानं निगलामि बाह्याभासं विलाप्यान्तरेव निजहृदयादिप्रदेशे स्थापयामीत्यर्थः । इति धारणाव्यापारोऽभिहितः । पूर्वत्र तत्प्रतिविम्बग्रहणेनोत्तरत्र साक्षात्स्वरूपेण ध्यानव्यापारः प्रोक्तः । किं वानेन सह भवामीति शेषः । अत्र वा शब्दोपरोधाद्वाक्यच्छेदो बोध्यः । तथावृत्या किं वा एकतामाश्रये ऐक्यं भजे? । अत्र प्रथमेन । प्रवहद्ध्येयप्रत्ययस्याविच्छिन्नतया भासनात् सविकल्पः समाधिः, द्वितीयेन तल्लयीभावनात्मा निर्विकल्पः समाधिरुक्तः इति बोध्यम् । एवं ध्यानधारणासमाधयो यथायोग्यं विद्वद्भिः स्वयमूह्या इत्यतस्तस्मिन्देवीस्वरूपभूते तदंशरश्मिरूपाः शक्तयः स्वाश्रयभेदावस्थानमसहिष्णवस्तदनुष्वक्ता भवन्तीति तात्पर्यम् । तदाह दक्षिणामूर्ति :—

चतुःषष्टिर्यतः कोट्यो योगिनीनां महौजसाम् ।
चक्रमेतत्समाश्रित्य सतां सिद्धिप्रदाः सदा ।। ५ ।।

इति; ।

इदानीं स्वभक्तानां क्लेशापहरणायान्वर्थाभिधाननिर्वचनभङ्ग्या देवीमुपालम्भते—

विश्वव्यापिनि ! यद्वदीश्वर इति स्थाणावनन्याश्रयः
शब्दः शक्तिरिति त्रिलोकजननि ! त्वय्येव तथ्यस्थितिः ।

**इत्थं सत्यपि शक्नुवन्ति यदिमाः क्षुद्रा रुजो बाधितुं**
**त्वद्भक्तानपि न क्षिणोषि च रुषा तद् देवि ! चित्रं महत् ॥६॥**

हे विश्वव्यापिनि ! जगद्व्यापिके ! संविदो हि दशादिपरिच्छेदाभावात् विभुत्वप्रसिद्धेः । अथ च सप्तम्यन्तमिदं । क्षित्यन्तप्रसरत्प्रपञ्चलक्षणक्षोभेऽपि स्वस्वरूपादप्रच्युतस्वभावत्वादनुत्तरपदेऽवतिष्ठमानः स्थाणुः परमशिवः, स च विश्वं षडध्वलक्षणमाकाशादिवद्बहिरन्तर्व्याप्नोति, स्वेच्छयैव विश्वस्य दर्पणवत्स्वानतिरिक्तत्वेऽप्यतिरिक्तायमानत्वात्स्वान्तरेवावभासनादगर्भीकृतविश्व इत्यर्थः, इति स्थाणोर्विशेषणं वा । तथातथावभासनसामर्थ्यमेव तस्मिन्समवेतं स्वातन्त्र्यलक्षणमैश्वर्यं तद्युक्तत्वादेवेश्वरः स्वतन्त्रः ।

'तथा श्रीमालिनीवार्तिके'—

तद्य एव सतो भावान् शून्यीकर्तुं तथासतः ।
स्फुटीकर्तुं स्वतन्त्रत्वादीशः स परमेश्वरः ॥ (१-९९)

'श्रुतिरपि'—

'सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिरिति' । (बृह० ४।४।२२)
एष सर्वेश्वर एष भूताधिपतिरिति च । (बृह० ४।४।२१)

तदुक्तं 'श्रीकामिके'—

तस्य देवातिदेवस्य परापेक्षा न विद्यते ।
परस्य तदपेक्षित्वात्स्वतन्त्रोऽयमतः स्थितः ॥

इति ।

नित्यसम्बन्धशीलता वरच्प्रत्ययेन द्योत्यते । तस्मिन्विश्वव्यापिनि स्थाणौ यद्वदीश्वर इति शब्दः, अविद्यमानोऽन्यो व्यतिरिक्तो ब्रह्मादिराश्रयोऽभिधेयो यस्य सोऽनन्याश्रयस्तस्मादन्यार्थवृत्तिर्नास्ति अन्येषां तत्परतन्त्रत्वात् । अथ च यः स्थाणुरेकदेशस्थत्वादचलः स कथं विश्वं व्याप्नुयात् इति विरोधच्छाया । हे त्रिलोकस्य भूरादेर्भवाभवादेर्वा जननि ! जनयित्रि ! मातः ! 'करणशक्तिः स्वतोऽनुभवादिति (शि०सू ३।३७) सूत्रोक्तनीत्या स्वानुभवप्रसिद्धः शक्तिरिति शब्दः स्वातन्त्र्यं सारो वीर्यं बलमैश्वर्यमित्यादिशब्दैरागमेषूद्घोष्यमाणः सर्वसामर्थ्यलक्षणः पर-

शिवः दयभूतस्तया विना तस्यासारप्रायत्वात्पाषाणादिवज्जडसादृश्यमापतेत् । यथा घटादिर्भावो मुकुरे प्रतिबिम्बितस्तदतिरेकायमाणत्वेनावभासमानोऽपि वस्तुतो मुकुरादनतिरिक्त एव, अन्यथा तयोः परस्परं पार्थक्येन भानापत्तेस्तद्वत्परमशिवेन प्रकाशवपुषा स्वेच्छया स्वात्मन्येव विश्वमिदं स्वस्वरूपातिरिक्तायमानत्वेनावभासितं सत्स्वानतिरेकेणैव क्रोडीकृतमिति भावः । यदुक्तं श्रीमदभिनवगुप्ताचार्यपादैः 'श्रीतन्त्रालोके'—

उक्तं च कामिके देवः सर्वाकृतिर्निराकृतिः ।
जलदर्पणवत्तेन सर्वं व्याप्तं चराचरम् ॥

इति ।

अत्र हेतुरूपेण द्वितीयार्थेनेदमुक्तं भवति—अयं परमशिवो विश्वमयत्वेऽपि विश्वोत्तीर्णस्तदुत्तीर्णत्वेऽपि तन्मय इत्येक एव तथातया विजृम्भमाण ईश्वराद्वयपरमार्थः सूचितः । स त्वय्येव तथ्यानुपचरितत्वाद्वास्तवी स्थितिः संकेतलक्षणा यस्य, वस्तुतस्त्वदर्थाभिधायीत्यर्थः । अयमत्र भावः—अस्य स्थाणोः स्वस्वभावाप्रच्यावितः परमशिवस्य भेदाभावाद्व्यापकत्वादिधर्मरहितस्यैक एव स्वभावभूतोऽहंप्रत्यवमर्शाख्यो विभुत्वनित्यत्वादिधर्मजाताक्षेपको धर्मोऽस्ति यः स्वातन्त्र्यशक्तिरित्युद्घोष्यते, सैव हि तत्तदेषणाद्युपाधिवशान्नानात्वेन व्यवहृता । तयैवेश्वरस्यतत्तद्देशकालाद्याभाससहस्रोल्लासनसामर्थ्यं युज्यते । तदुक्तमाचार्याभिनवगुप्तपादैः—

न चास्य विभुताद्योयं धर्मोऽन्योन्यं विभिद्यते ।
एक एवास्य धर्मोऽसौ सर्वाक्षेपेण वर्तते ॥
तेन स्वातन्त्र्यशक्त्यैव युक्त इत्याञ्जसो विधिः ।
बहुशक्तित्वमप्यस्य तच्छक्त्यैवावियुक्तता ॥

इति ।

तथा च 'श्रीपूर्वे—'

या सा शक्तिर्जगद्धातुः कथिता समवायिनी ।
इच्छात्वं तस्य सा देवि! सिसृक्षोः प्रतिपद्यते ॥
सैकापि सत्यनेकत्वं यथा गच्छति तच्छृणु ।
एवमेतदिदं वस्तु नान्यथेति सुनिश्चितम् ॥
ज्ञापयन्ती जगत्यत्र ज्ञानशक्तिर्निगद्यते ।

'एवं भूतमिदं वस्तु भवत्विति यदा पुनः ॥
जाता तदैव तद्वस्तु कुर्वत्यत्र क्रियोच्यते ।
एवमेषा द्विरूपापि पुनर्भेदैरनन्तताम् ॥
अर्थोपाधिवशाद्याति चिन्तामणिरिवेश्वरी' ॥]

[इ]ति। एवं यस्य कस्यचन घटादेर्भावस्य स्वं रूपमेव फलभेदाद्भेदारोपणेन शक्तिरिति [क]ल्प्यते, न तु वस्तुतः पदार्थान्तिरमसौ किञ्चिदित्यप्यद्वयता निर्वाहसिद्धिरिति। तदुक्तं—'फलभेदादारोपितभेदः पदार्थात्मा शक्तिरि'ति ॥

[उ]क्तं 'श्रीतन्त्रालोके'—

'शक्तिश्च नाम भावस्य स्वं रूपं मातृकल्पितम् ।
तेनाद्वयः स एवापि शक्तिमत्परिकल्पने' ॥

[इ]ति,

इत्थमेवमीश्वरशक्तिशब्दद्वयनिरुक्तिप्रकारे सत्यपि दैत्यवधादिप्रसिद्धया विद्यमाने सिद्धेऽपि इमाः क्षुद्रा असारप्रायत्वात्तुच्छा रुजो जन्ममरणव्याधयस्तत्कृतसन्तापादिपीडास्त्वद्भक्तान्त्वद्भक्तिमतः साधकजनानपि बाधितुं क्लेशितुं शक्नुवन्ति सामर्थ्यमादधते प्रगल्भन्ते इत्यर्थः। यद्यस्मात्कारणात्ता रुजो न क्षिणोषि क्षीणा न करोषि। हे देवि! असुरबाधापहरणतद्विनाशनादिक्रीडाशालिनि! तद्रोगानपहरणं महच्चित्रं स्वस्वभावस्थगनात्तदुपेक्षणमत्याश्चर्यमित्युपालम्भेन रुजो निरसितुं प्रवर्तयतीत्यर्थः। त्वद्भक्तानपीत्यनेनाभक्तेषूपेक्षणं समुचितं, भक्तेषु तु सर्वथानौचित्यात्तदवश्यसाध्ये तत्कार्ये नोपेक्षावसरः, रुजामपि त्वत्सेवकेष्वियत्वैयात्यमिति च ध्वन्यते ॥ ९ ॥

ननु कथं व्याधयो निरसनीया इत्याशङ्कमानान्प्रति तन्निर्मोकोपयोगिदेवीध्यानान्तरं सफलं निरूपयति—

इन्दोर्मध्यगतां मृगाङ्कसदृशच्छायामनोहारिणीं
पाण्डूत्फुल्लसरोरुहासनगतां स्निग्धप्रदीपच्छविम् ।
वर्षन्तीममृतं भवानि! भवतीं ध्यायन्ति ये देहिन-
स्ते निर्मुक्तरुजो भवन्ति विपदः प्रोज्झन्ति तान्दूरतः ॥ ७ ॥

'ललाटार्धं समारभ्य कपालोर्ध्वावसानकम् ।
द्व्यङ्गुलोर्ध्वं शिरो देशः परं व्योम प्रकीर्तितम्' ॥

इति स्वच्छन्दसंग्रहोक्तलक्षणस्थाने परव्योम्नि यदिन्दुमण्डलं चिच्चन्द्र-बिम्बं तन्मध्यगतां तन्मध्यस्थां, तत्र पाण्डुः श्वेतमुत्फुल्लं विकसितं सरोरुहमम्बुजं तदेव आसनं पीठं तद्गतां श्वेतपद्मासनासीनां, तथा मृगाङ्कस्य शशाङ्कस्य सदृशी या छाया कान्तिस्तया मनोहारिणीं मनःप्रीतिकरीमाह्लाददायिनीमित्यर्थः । स्निग्धा मसृणा प्रदीपस्येव च्छविर्दीप्तिर्यस्यास्तां हेमाभामित्यर्थः । रोगनिर्मोचनादि-फलानुगुण्येन शक्तिबीजोपासनाध्यानमिदं बोध्यम् । यद्वा स्निग्धा चिक्वणा प्रदीप-स्येव च्छविः रुचिर्यस्य तत् तादृशं लाक्षारसारुणवर्णममृतं पीयूषं वर्षन्तीमाज्ञाचक्र-स्थ पादयुग्ममध्यादधश्चक्रेषु स्रवद्बिन्दुधाराप्रवर्षिणीमित्यर्थः । यदुक्तं 'ललिताभाष्ये'

'सा हि मूलाधाराख्ये चक्रे सार्धत्रिवलयाकारेण सुप्ता सती योगिभिरु-त्थापिता ब्रह्मविष्ण्वादिग्रन्थींश्च भेदयन्ती सहस्रारं नीता सती तत्कर्णिकारूपं चन्द्रमण्डलादमृतं स्रावयतीति' । पीयूषस्यारुणवर्णत्वमागमेषु प्रसिद्धं, तदुक्तम्—

'नीता सा शनकैरधोमुखसहस्रारारणाब्जं परे
श्च्योतत्पूर्णशशाङ्कबिम्बमधुतः पीयूषधाराप्लुतिम् ।
रक्तां मन्त्रमयीं निपीय च सुधानिष्यन्दरूपा विशेद्-
भूयोऽप्यात्मनिकेतनं पुनरपि प्रोत्थाय पीत्वा विशेत्' ॥

इति, तदुक्तं श्रीदुर्वाससा—

'शीर्षाम्भोरुहमध्ये शीतपीयूषवर्षिणीं भवतीम् ।
अनुदिनमनुचिन्तयतामायुष्यं भवति पुष्कलमवन्याम्' ॥

इति । हे भवानीति प्राग्वत्, भवतीं पिण्डान्तरस्थां कुण्डलिनीरूपां ये साधका देहिनः शरीरिणो ध्यायन्ति स्मरन्ति सामरस्यतया समाविशन्ति । यदुक्तं—

ध्यानं शक्तिसमावेशः सा महत्सामरस्यता ।

इति ।
तथा—

'अमृतामृत[illegible]तर्पितचराचरम् ।
भवानि ! भवकान्तं त्वां [illegible]मृते[illegible]' ॥

…ति ।

…खड्ग:खादिभोगायतनत्वाद् देहिन इति विशेषणं साभिप्रायम् । ते जना निर्मुक्त-
…जस्त्यक्तामया भवन्ति । यद्वा–रुग्भिः रोगैर्ज्वरापस्मारादिभिर्विषादिजन्यैर्वा
…निश्चयेन निःशेषेण मुक्ता निर्गदा भवन्ति । दूरतश्च दूरे तान्प्रोक्तध्यानशीलिनो
…पद आपत्तयो लूतावृश्चिककीटकामलाशीतिका ज्वराद्युद्भवाः प्रोज्झन्ति
…जहति न स्पृशन्तीत्यर्थः । तदुक्तं—

'शृणु देवि! प्रवक्ष्यामि शक्तिबीजस्य साधनम् ।
सृष्टिसंहारपर्यन्तं शरीरं चिन्तयेत्परम् ॥
स्रवत्पीयूषधाराभिर्वर्षन्तीं विषहारिणीम् ।
हैमप्रभाभासमानां विद्युन्निकरसुप्रभाम् ॥
स्फुरच्चन्द्रकलापूर्णकलशं च वराभये! ।
ज्ञानमुद्रां च दधतीं साक्षादमृतरूपिणीम् ॥
ध्यायन्विषं हरेन्मन्त्री नानाकारव्यवस्थितम् ।
तस्य संस्मरणाद् देवि! नीलकण्ठत्वमागतः ॥
अहं मृत्युञ्जयो भूत्वा विचरामि जले स्थले ।
वैनतेयसमो मन्त्री विषभारसहस्रनुत् ॥
भूतप्रेतपिशाचाश्च नाशयेद्रोगसंचयम् ।
चातुर्थिकज्वरान्सर्वानपस्मारांश्च नाशयेत्' ॥ ७ ॥ इति ।

…वं समनन्तरोक्तध्यानव्यापारेणैव विपन्मोचनपूर्वं संपत्प्राप्तिं निरूपयन्नतिस्पृह-
…सौन्दर्यशालि ध्येयोत्प्रेक्षणैकमग्नमनस्कतयानन्दातिशयचमत्कारं द्योतयति—

पूर्णेन्दोः शकलैरिवातिबहलैः पीयूषपूरैरिव
क्षीराब्धेः लहरीभरैरिव सुधापङ्कस्य पिण्डैरिव ।
प्रालेयैरिव निर्मितं तव वपुर्ध्यायन्ति ये श्रद्धया
चित्तान्तर्निहतार्तितापविपदस्ते संपदं बिभ्रति ॥८॥

हे भवानीत्यनुवर्तनीयं । पूर्णेन्दोः, राकाहिमांशोः शकलैः [illegible]
…बहुलैरतिनिबिडैः सान्द्रैः पीयूषस्यामृतस्य पूरैः प्रवाहैरिव । तथा क्षीराब्धेर्दुग्ध-
…सागरस्य लहरीणां तरङ्गाणां भरैर्भरणैरतिशयैरिव तथा, सुधापङ्कस्यामृत-

लेपस्य पिण्डैर्गोलैः समूहैरिवेत्यर्थः । तथा प्रालेयैर्हिमैरिव निर्मितमाचितं मानं सम्यक्कृतचयनं वा तव प्रागुक्तामृतेश्वरीरूपाया वपुर्गात्रं श्रद्धयात्मादरेण ये चित्तान्तर्हृदयमध्ये ध्यायन्ति तत्प्रत्ययैकतानतया चिन्तयन्ति । ते भक्तिश्रद्धाभ्यामुपलक्षिता निहता निरस्ता आर्तयो ज्वरादिपीडास्तापा आध्यात्मिकाद्यास्त्रिविधा विपदः कामजदोषादिव्यसनानि दुर्गतयश्च येषां ते संपदं श्रियं बिभ्रति दधतीत्यर्थः । अत्र ध्यायिनां चेतसि तापापनोदनपूर्वध्यानजन्यचमत्कारसंबन्धेनानेकधोत्प्रेक्षणकाह्लादातिशयकारित्वं गम्यते ॥ ८ ॥

अथान्तर्यागोक्तसमुचितध्येयाकारनिरूपणेन ध्यानफलं निर्दिशति—

ये संस्मरन्ति तरलां सहसोल्लसन्तीं
त्वां ग्रन्थिपञ्चकभिदं तरुणार्कशोणाम् ।
रागार्णवे बहुलरागिणि! मज्जयन्तीं
कृत्स्नं जगद् दधति चेतसि तान्मृगाक्ष्यः ॥ ९ ॥

ये देशिककटाक्षपातवशात्प्रबोधितशक्तिका अत एव कुण्डलिनीरूपां त्वां सहसा लघु उल्लसन्तीं स्फुरन्तीमूर्ध्वमुद्गच्छन्तीं वा, तरलामिव तरलां विद्युद्वदुद्दीप्यमानां मूलाधारे दीप्तविद्युल्लताकारां, तथा ग्रन्थीनां गणेशादि ग्रन्थीनां मणिपूरादिचक्रात्मनां वा पञ्चकं भिनत्तीति भित्तां पर्वपञ्चकोद्भेदनकारिणीं । यदुक्तम—

'वर्णैरर्णवषड्दिशारविकलाचक्षुर्विभक्तैः क्रमात्
सान्तैरादिभिरावृतान् क्ष ह युतैः षट्चक्रमध्यानिमान् ।
डाकिन्यादिभिराश्रितान्परिचितान् ब्रह्मादिभिर्दैवतै-
र्भिन्दाना परदेवता त्रिजगतां चित्तेषु दत्तां मुदम्' ॥ इति ।
तथा—

तरुणार्कशोणां बालादित्यारुणप्रभाम् ॥ यदुक्तं 'ज्ञानार्णवे'—

'मूलादिब्रह्मरन्ध्रान्तं बिसतन्तुतनीयसीम् ।
उद्यत्सूर्यसहस्राभां विद्युत्कोटिसमप्रभाम्' ॥

इति । 'विज्ञानभैरवे'ऽपि—

'उद्गच्छन्तीं तडिद्रूपां प्रतिचक्रं क्रमोत्क्रमात्'* । (२९)।
'चिन्तयेत्तां द्विषट्कान्ते शाम्यन्तीं भैरवोदयः' ।। (२८)।

'सौन्दर्यलहर्यां'—

'महीं मूलाधारे' (९) इत्यादि ।

एवार्यादात्मनः प्रसरल्लोहितकिरणनिकरैः कृत्स्नं समस्तं जगदाधारादिचक्र-
ाब्जदलमध्यस्थिततत्तद्वर्णादिदैवतवरदादिशक्तिप्रपञ्चात्मकं 'स्वशक्ति प्रचयोऽस्य
विश्वम्' शि० 'सू० ३ । ३०' 'शक्तयोऽस्य जगत्कृत्स्न' मित्यादि नी-
त्या स्वशक्त्यात्मकं हे बहुलरागिणि ! अत्यारक्तवर्णे ! रागो देहरक्तिमा शृं-
गाररसवर्णात्मा तद्रूपेऽर्णवे सागरे, अत्रानवध्यपारतानवगाह्यत्वगाम्भीर्यगुण सा-
दृश्यात्सागररूपत्वम्। लौहित्यरागसागरे मज्जयन्तीं ब्रोडयन्तीं तन्मयतामापादय-
न्तीमित्यर्थः संस्मरन्ति ध्यायन्ति। यद्वा—रागार्णवे स्वकीयदेहारुणप्रभाप्रवाहरूपे-
ऽर्णवे कृत्स्नं जगदसंख्यब्रह्माण्डमण्डलं मज्जयन्तीमभेदेनावभासयन्तीमित्यर्थः ।
उक्तं 'ब्रह्माण्डपुराणे'—

'निजरुणप्रभापूरमज्जद् ब्रह्माण्डमण्डला' इति ।

तानेवं ध्यायिनो देवीभक्तान् मृगीणां हरिणीनामक्षिणी इवाक्षिणी वैशद्य-
चलतारमणीयत्वादिगुणसादृश्याद्यासां ता मृगाक्ष्यः कामिन्यो त्वत्पुराश्रिता यो-
गिन्यो रश्मिरूपाश्चेतसि स्वमनसि दधति स्थापयन्ति स्वत्वेन परामृशन्तीत्यर्थः—
।। ९ ।।

एवं प्रागुक्तध्यानमेव भङ्ग्यन्तरेण प्रपञ्चयति—

लाक्षारसस्नपितपङ्कजतन्तुतन्वी—
मन्तः स्मरत्यनुदिनं भवतीं भवानि !
यस्त्वं स्मरप्रतिममप्रतिमस्वरूपा
नेत्रोत्पलैर्मृगदृशो भृशमर्चयन्ति ।। १० ।।

भवं महादेवं संसारं कामं वानयति जीवयतीति भवानी । तदुक्तं—

---

* 'क्रमात्मक्रम्' मु० पु० पाठः ।

'रुद्रो भवो भवः कामो भवः संसारसागरः ।
तत्त्राणनादियं देवी भवानी परिकीर्तिता' ।।

यद्वा—परमेश्वरस्य जलमूर्तेर्भव इति सञ्ज्ञा । यथा 'लैङ्गे'—

'भव इत्युच्यते देवो भगवान्वेदवादिभिः' ।
सञ्जीवनेन लोकानामित्यादि ।

'वायुपुराणे' च—

'भवस्य या द्वितीया तु तनूरापः स्मृतेति वै' ।

तथा—

'यस्माद्भवन्ति भूतानि' ताभ्यस्ता भावयन्ति च ।
भवनाद्भावनाच्चैव भूतानां स भवः स्मृतः' ।।

ताभ्य इत्यद्भ्य इत्यर्थः । 'तस्मादापो भवः स्मृताः' इत्युपक्रमपाठाद्भवं जीवनरूपं जलमप्यानयति आप्यायनीशक्त्या जीवयतीति भवानी । यद्वा—भवस्य स्त्रीत्यर्थे पुंयोगलक्षणे ङीषि 'इन्द्रवरुणे*'त्यादिनानुगागमे च रूपं सिद्धम् । यद्वा-स्थानेश्वरपीठाधिष्ठातृदेवता, यदुक्तं 'पाद्मे'—'स्थानेश्वरे भवान्याख्या' इति । तदामन्त्रणं हे भवानि ! यो भवतीं त्वामनुदिनं प्रत्यहं, यद्वा—'पश्चात्समीपयोरनु' इत्युक्तेरनुशब्देन दिनस्य पश्चाद्रात्रिः तत् सामीप्येन प्रातःकालो वा लक्ष्यते, तेन रात्रौ महानिशायां प्रातर्वान्तर्हृदयान्तः, यद्वान्तरित्यान्तरे मध्यमे धाम्नि सौषुम्णे मार्गे स्मरति चिन्तयति । कीदृशीं त्वां लाक्षारसेनालक्तकद्रवेण स्नपित आप्लुतो रञ्जित इत्यर्थः, यः पङ्कजतन्तुर्मृणालसूत्रं तद्वत्तन्वीं सूक्ष्मां रक्तसूक्ष्मतन्तुनिभामित्यर्थः । तं ध्यानेन प्राप्तत्वद्रूपैकात्म्यमप्रतिमस्वरूपा अतिशयसौन्दर्यविलासादिगुणवत्तया निरुपमाकारा मृगदृश इति प्राग्वद् भृशमत्यर्थं नेत्रोत्पलैर्नयनरूपैः कुवलयपुष्पैरर्चयन्ति पूजयन्त्यपरितृप्ततया निर्निमेषं दर्शं दर्शं हृदन्तःप्रवेशयन्तीत्यर्थः । यदुक्तं 'श्रीदुर्वाससा'—

'अभिनवसिन्दूराभामम्ब ! त्वां चिन्तयन्ति ये हृदये ।
उपरि निपतन्ति तेषामुत्फुल्लनयनाकटाक्षकल्लोलाः' ।।

---

* पा० सू० ४।१।४९

इति, । मृगदृशोऽनेककोटियोगिनीरूपा बैन्दवादित्रैलोक्यमोहनपर्यन्तचक्रनवकाधिष्ठात्र्य इति रहस्यम् । एवं सर्वत्र ज्ञेयमिति ॥ १० ॥

इदानीं परावाग्रूपत्वेन देवीभावनां परामृशंस्तत्समावेशं स्वात्मविश्रान्तिभूमिं स्फुटयति—

स्तुमस्त्वां वाचमव्यक्तां हिमकुन्देन्दुरोचिषम् ।
कदम्बमालां बिभ्राणामापादतललम्बिनीम् ॥ ११ ॥

वक्ति विश्वमादिक्षान्तात्मकं सकलतत्त्वगर्भं स्वाभेदेन परामृशतीति वाक् परारूपा पूर्णाहन्तास्वरूपिणी प्रकाशजीवितभूता, यदुक्तं—

'चितिः प्रत्यवमर्शात्मा परावाक्स्वरसोदिता ।
स्वातन्त्र्यमेतन्मुख्यं तदैश्वर्यं परमात्मनः' ॥ ई० प्र० १।५।१३ इति ।

तदुक्तं हरिणा—

'वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती ।
न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी' ॥

इति,

'आगमेऽपि'—

'स्वरूपज्योतिरेवान्तः परा वागनपायिनी ।
यस्यां दृष्टस्वरूपायामधिकारो निवर्तते' ॥ इति ।

तथा—

'एक एव प्रकाशाख्यः परः कोऽपि महेश्वरः ।
यस्य शक्तिर्विमर्शाख्या सा नित्या गीयते बुधैः' ॥ इति ।

सा व्यक्ता व्यक्तिं स्थूलसूक्ष्मवर्णकदम्बात्मकमध्यमादिभावमनापन्ना उल्लङ्घिष्यत्पश्यन्त्यादिवाक्प्रसरा वा, यदुक्तं 'श्रीसाम्बेन'—

'या सा मित्रा*वरुणसदनादुच्चरन्ती त्रिषष्टिं
वर्णानत्र प्रकटकरणैः प्राणसङ्गप्रसूतान् ।

---

* मित्रावरुणेति पाठान्तरम् ।

तां पश्यन्तीं प्रथमसमुदितां मध्यमां बुद्धिसंस्थां
वाचं वक्त्रे करणविशदां वैखरीं च प्रपद्ये ॥ (४) इति ।

श्रुतिश्च—

'या वागुदिता या चानुदिता शिवा नः शन्तमा भव ।
सुमृडीका सरस्वति! मा ते व्योम सन्दृशे ॥ इति ।
नमो वाचे नमो वाचस्पतये या वागुदिता या चानुदिता तस्यै वाचे नमः ॥
चत्वारि वाक्परिमिता पदानि तानि विदु र्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति' ॥

इतिच, (ऋ०अ० २-३-२२)

इयमेतादृशी वाक् प्रकाशात्मनः कामेश्वरस्य स्वरूपानुप्रविष्टा मयूराण्डरसन्यायेनोद्भविष्यद्वाक्त्रितयशवलीभावस्वभावोद्योगवृत्तिलक्षणां सूक्ष्मतामवलम्ब्य बहिर्वेद्योन्मुखीभावाभ्युपगमेन पश्यतीति व्युत्पत्त्या पश्यन्ती संज्ञेच्छाशक्तिः । अतो बुद्धिवृत्तिमात्रोपारूढया मध्यमा संज्ञा ज्ञानशक्तिः । कण्ठताल्वादिकरणव्यापारोपारूढया स्फुरणाद्वैखरीत्यभिधाना क्रियाशक्तिस्त्रिकादिनयेषु परापराद्यात्मना च निरूप्यते । इत्थं सर्वोऽयं परावाच एव विस्फारः । यदुक्तं श्रीमदुत्पलदेवपादैः—

'आमूलाद्वाग्लता सेयं क्रमविस्फारशालिनी ।
त्वद्भक्तिसुधया सिक्ता त्वत्प्रसादफलास्तु मे' ॥ इति ।
(उ०स्तो० १-१३)

तथा च 'सुभगोदयवासनायां'—

'पराभूजन्मपश्यन्ती वल्लीगुच्छसमुद्भवा ।
मध्यमा सौरभा वैखर्यक्षमाला जयत्यसौ' ॥ इति ।

'श्रीतन्त्रालोके'—

'प्राक्पश्यन्त्यथ मध्यान्या वैखरी चेति ता इमाः ।
परापरा परादेवी चरमा त्वपरात्मिका ॥
इच्छादिशक्तित्रितयमिदमेव निगद्यते ।
एतत्प्राणित एवायं व्यवहारः प्रतायते' ॥ इति ।

एवं पश्यन्ती मध्यमा वैखर्यानुपूर्व्या कामेश्वरस्वात्मचमत्कारमयी परा विमर्श-शक्तिरेव तथा तथा विजृम्भते इत्युक्तमत एव वक्तीति कर्तृव्युत्पत्त्या वाक्त्वं न पुनरुच्यते इति कर्मानुगुण्यात्तथा च वेद्यताप्रसक्तेः । यदुक्तं—

'त्वामुपासितगुरूत्तमाः परां वाचमाहुरविभक्तविश्वकाम् ।
स्वप्रकाशनविमर्शनात्मिकां वक्ति वागिति निरुक्तिमास्थिताम्' ।

इति । तद्वृत्तावेव शुद्धाशुद्धात्मसर्वव्यवहारस्यावभासनात् । तदुक्त'मीश्वरप्रत्यभिज्ञायाम्'—

*'इत्थमत्यन्तभिन्नार्थावभासखचिते विभौ ।
समलो विमलो वापि व्यवहारोऽनुभूयते' ॥१।७।१४ ।

इति,

कीदृशीं हिमस्तुषारः कुन्दो माघ्यपुष्पमिन्दुश्चन्द्रस्तेषां रोचिरिव रोचिः प्रभा यस्यास्तामाह्लादिकान्ति वेद्योपरागाभावाच्छुद्धाभासमित्यर्थः । तस्यां भिन्न-वेद्याभासात्मतापोपशमनात्स्वात्मानुभवरसास्वादातिशयादेव तादृग् रोचिष्कत्वम् । पादतलशब्देनात्र चरमं पृथिवीतत्त्वमुच्यते । समूहवाचिना कदम्बशब्देन मायी-यामायीयवर्णसमूह उच्यते । तेनादिक्षान्तार्णमालाशोभाधायिनीं पुष्पमालामिवा-पादतललम्बिनीं पृथिवीतत्त्वपर्यन्तं प्रसृत्य लम्बमानां स्वाश्रयत्वाद्बिभ्राणां स्वात्मादर्शे स्वानतिरिक्तत्वेऽप्यतिरेकायमाणतयावभासयन्तीं स्वप्रकाशाच्छुरित-तया पोषयन्तीं चैवंरूपां त्वां स्तुमः उपास्महे, इति स्वस्य तत्समावेशभूविश्रान्ति द्योतयति । भवानीत्यनुवर्तनीयम् । अथ च वाचं सरस्वतीं भूतलिपिरूपामनुन्मिषित-पदवाक्यात्मव्यक्तानेकलौकिकालौकिकभाषात्मतयाव्यक्तामव्याकृतत्वादस्फुटां भावि-वर्णपदमन्त्रात्मवाचकाध्वरूपेणानुन्मिषतां वा । हिमेत्यादिना शुक्लाभासां; अथवा हिमकुन्दसदृशेन्दुना मौलिस्थेन रोचिः रुचिर्यस्यास्ताम् । कदम्बेत्यादिना नीपकुसुममाला वर्णमाला चाभिधीयते, तेनाद्या पादतलान्तावलम्बिन्यपरा शिरसः पादान्तं भूतलिपिमयतनुरित्यर्थः । तदुक्तं 'सिद्धसारस्वते'—

**'अथ भूतलिपिं वक्ष्ये सुगोप्यामतिदुर्लभाम् ।**
**सारस्वते महातन्त्रे गोपितां चातिसिद्धिदाम्' ॥**

---

* इत्थमत्यर्थभिन्नार्थावभासेति का०

'विष्णोः सकाशाद्यां लब्ध्वा मुनयो वाञ्छितं फलम् ।
लेभिरे सकलं देवि ! किं बहूक्तेन सर्वदा ।।
ह्रस्वानां पञ्चकं वर्ग आदितः परिकीर्तितः ।
द्वितीयः कथितो देवि ! शिवाद्याश्चतुरक्षरः ।।
खं वायुवह्न्यम्बुधरास्तृतीयः संप्रकीर्तितः ।
वर्गान्त्यादिद्वितीयोपान्त्यतृतीयैः क्रमादमी ।।
नववर्गात्मको मन्त्रो द्विचत्वारिंशदक्षरः' ।।

इति ।

'ध्यानमस्य प्रवक्ष्यामि देवेशि ! मुनिपूजितम् ।
शाश्वतं ये भूतमयं प्रवदन्ति मनीषिणः ।।
चिद्बीजं बिन्दुनादाह्वशिफं विश्वम्भराक्षरैः ।
शाखासमूहैः सकलदिशासु सुविजृम्भितम् ।।
जलवर्णदलव्रातेनाच्छादितजगत्त्रयम् ।
कृशानुवर्णाङ्कुरैश्च संदीप्तं सुरभूरुहम् ।
रत्नाङ्कुरैरिव शुभं पवनाक्षरशोभितैः ।
कुसुमैर्दीपयन्तं च स्वकीयतनुसच्छ्रियम् ।।
वियदक्षरसद्रूपफलैरानम्रमम्बिके ! ।
सर्वभूताश्रयं नित्यं परामृतमधुद्रवैः ।।
सिञ्चन्तं परमेशानि ! देवीं वागीश्वरीं पराम् ।
निगमागमसंक्लृप्तसमुन्नतिसुशोभिताम् ।।
शिवशक्त्यात्मकं छायासमाश्रितजगत्त्रयम् ।
यमाश्रित्य मुनीन्द्रौघा वाञ्छितार्थान्प्रपेदिरे ।।
एवं भूतार्णवृक्षस्य मूले त्वक्षरपङ्कजे ।
वागीश्वरीं स्मरेद्देवीं सकलेष्टफलप्रदाम्' ।।

इति ।

अथवा वाङ्मातृकामयी सापीषद्व्यक्ता बीजरूपादिक्षान्तवर्णकदम्बकल्पित-समस्तावयवा च । यद्वा—अव्यक्तेति दैवी वाक् । तथा श्रुतिः—

'देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्तीति' । अव्यक्तनादरूपा सा यस्या घोषादिशब्दात्मना विस्फारस्तद्बीजरूपेत्यर्थः । तदुक्तं 'घोषादिदशधा

शब्दबीजभूताय शम्भवे'। इति, स्फोटाख्यशब्दब्रह्ममयी वा, यतः सर्वमिदं शब्दार्थविवर्तभावेन प्रथते। इति वैयाकरणाः पश्यन्तीपदमभिनिविष्टाः। विस्तरस्त्वग्रे तत्तत्प्रस्तावे प्रपञ्चयिष्यते ॥ ११ ॥

अधुना वाग्भवविद्यां जपतो वागीशीस्मरणप्रकारं सफलमाह—

मूर्ध्नीन्दोः सितपङ्कजासनगतां प्रालेयपाण्डुत्विषं
वर्षन्तीममृतं सरोरुहभुवो वक्त्रेऽपि रन्ध्रेऽपि च।
अच्छिन्ना च मनोहरा च ललिता चातिप्रसन्नापि च
त्वामेव स्मरतां स्मरारिदयिते! वाक्सर्वतो वल्गति ॥१२॥

मूर्ध्नि ब्रह्मरन्ध्रे सितपंकजासनगतां शुक्लवर्णपद्मस्य कर्णिकारूप आसने पीठे गतां निषण्णां अधोमुखसहस्रदलकमलकर्णिकाकुलासनस्थां महाकामकलारूपामित्यर्थः। तथा प्रालेयपाण्डुत्विषं प्रालेयस्य हिमस्य पाण्डुः सिता त्विट् रुचिरिव यस्यास्तामतिशुक्लवर्णाम्। तथा सरोरुहभुवः पद्मयोनेर्ब्रह्मबिलाधिष्ठातुर्ब्रह्मणो वक्त्रे रन्ध्रेऽपि च समुच्चयपदेन यौगपद्यं द्योतितं, रन्ध्रशब्देन तत्रस्थब्रह्मावरणशक्तिग्रहणं, तेन ब्रह्मबिलस्थब्रह्मावरणशक्तिसमूहवक्त्रेष्वपीत्यर्थः।

केचित्तु—मूलाधारचक्राधिष्ठातुर्ब्रह्मणो मुखे, रन्ध्रे ब्रह्मरन्ध्रे परमशिवपदेऽपि इत्याचक्षते। अथ च ब्रह्मणो वक्त्रे कामरूपाख्ये गुप्तपीठे। यदुक्तं—

'कामरूपमतः परं।
यत्पीठं ब्रह्मणो वक्त्रं गुप्तं सर्वसुखावहम् ॥
यतो देवाश्च देव्यश्च मुनयश्चैव भावजाः।
सर्वेऽप्याविर्भवन्त्येते तेन गुप्तं महीतले' ॥

इति गन्धर्वे। इन्दोः सहस्राराब्जकर्णिकास्थचिच्चन्द्रमण्डलादमृतं सुधारसमथवादमृतानलकुण्डलिन्योर्योनिलिङ्गरूपयोर्निर्मथनसंभूतं वर्षन्तीं क्षरन्तीं, तथा च श्रुतिः—

'अमृतस्य धारा बहुधा दोहमानं चरणं नो लोके सुधितान्दधातु' इति।
(त्रि॰म॰ ७१३)

'चिन्तामणिस्तवे' च—

'कुलाङ्गनेषाप्यथ राजवीथीः
प्रविश्य संकेतगृहान्तरेषु ।
विश्रम्य विश्रम्य वरेण पुंसा
संगम्य संगम्य रसं प्रसूते' ॥

ते । त्वां कुण्डलिनीस्वरूपां स्मरतां सद्गुरूक्तयुक्त्या विभावयतां हे स्मरारि-
यिते ! कामेश्वरवल्लभे ! वाग्वाणी सूक्तिमयी सर्वतः सर्वासु भाषास्वच्छिन्ना
छेदरहिता निरर्गला वा मनोहरा शृङ्गारादिनवरसास्वादनिर्भरत्वाद्धृद्या प्रसाद-
माधुर्यादिगुणोत्कर्षयुक्तत्वादतिप्रसन्ना शब्दार्थालङ्कारालंकृतत्वात्पदार्थलालित्याच्च
ललिता वल्गति विलसति मुखात् निःसरतीत्यर्थः । न केवलं कतिपयाङ्गसुन्दरी
वाक्विजृम्भतेऽपि तु सर्वाङ्गलावण्यवती सरसा कवित्वशक्तिरपीति समुच्चय-
पदबाहुल्येन द्योत्यते इति । तदुक्तं 'ज्ञानार्णवे'—

'मूलादिब्रह्मरन्ध्रान्तं स्रवत्पीयूषवर्षिणीम् ।
तस्माज्ज्योतिर्[1]मयीं ध्यायेज्जि[2]ह्वाग्रेऽमृतधारिणीम्' ॥
पाषाणेन समो वापि मूर्खो जीवसमो भवेत् ॥
१६ पट० १२-१३

'वामकेश्वरे' च—

सत्तर्कपदवाक्यार्थशब्दालङ्कारसारवित्त्यारभ्य' (४।२७)

सर्वभाषारतज्ञानी समस्तलिपिकर्मकृत् ।
नानाशास्त्रार्थशिक्षादिवेत्ता भुवनविश्रुतः ॥
सर्ववाङ्मयवेत्ता च सर्वज्ञो देवि ! जायते ॥ (४-३२-३३)

इत्यन्तं मन्त्रसिद्धस्य प्रयोगापेक्षमित्येवमुत्तरत्रापि बोध्यमिति ॥ १२ ॥

इदानीं श्रीपुरस्थानां त्रैलोक्यमोहानादिसर्वानन्दमयान्तचक्रेश्वरीणां साध-
केभ्यः पृथक्फलं निर्दिशन् युगपद्वितरणप्रसक्तौ तत्कियत्स्यदिति ध्वनयति—

---

१. मयं ध्या० । २. जिम्ह्याग्रे दीर्घरं । जिह्वां दीपस्वरूपिणीम् इति मु०पु०
पाठान्तराणि

ददातीष्टान्भोगान्क्षपयति रिपून् हन्ति विपदो
दहत्याधीन् व्याधीन् शमयति सुखानि प्रतनुते ।
हठादन्तर्दुःखं दलयति पिनष्टीष्टविरहं
सकृद्ध्याता देवी किमिव निरवद्यं न कुरुते ॥ १३ ॥

भोगानैहिकामुष्मिकान्, उभयफलको हि प्रयोगपूर्वको ध्यानव्यापारस्तत्रैहिकभोगोत्तरमामुष्मिकभोगजातस्यावश्यंभावादत एव भोगानिति पदे ऐहिकामुष्मिकभोगद्वयपरता व्याख्येया । अत्र भोगानां पुत्रादिसंपत्त्यविनाभावसम्बन्धेन पुत्रदारादिसहितानिति विशेषणमध्याहार्यम् । मोक्षे तु स्वस्वरूपकैवल्यमात्रावस्थारूपत्वेन तत्र तादृग्भोगासंभवात् । यथा कामराजोपासकस्य सुदर्शनाख्यस्य राजपुत्रस्येष्टभोगप्राप्तये जगदम्बया भगवत्या काशिराजपुत्री शशिकला तद्वरणायाज्ञप्ता । यदुक्तं 'भागवते' तृतीयस्कन्धे—

'एतस्मिन्समये पुत्री काशिराजस्य सत्तमा ।
नाम्ना शशिकला दिव्या सर्वलक्षणसंयुता' ॥

इत्युपक्रम्य—

'स्वप्ने तस्याः समागत्य जगदम्बा निशान्तरे ।
उवाच वचनं चेदं समाश्वास्य सुखं स्थिरा ॥
वरं वरय सुश्रोणि ! मम भक्तं सुदर्शनम् ।
सर्वकामप्रदं तेऽस्तु वचनान्मम भामिनि' ॥ इति ।

तया देवीप्रसादादेव चण्डतनयो भुसुण्डो वायसः सह भ्रातृभिरद्यापि बहून्कल्पान्मुक्तः स्थित एव । तथा च भुसुण्डवाक्यं वशिष्ठं प्रति 'योगवासिष्ठे'—

'भ्रातरश्चण्डतनया वायसा एकविंशतिः ।
भ्रातृभिः सह हंसीभिर्ब्राह्मी भगवती तदा ॥
चिरमाराधितास्माभिः समाधिविरमे सति ।
प्रसादपरया काले भगवत्या ततः स्वयम् ॥
तथैवानुगृहीताःस्मो येन मुक्ता वयं स्थिताः' ।

इत्युक्तभोगस्यैव निर्विघ्नमेव संपत्त्यर्थानि विशेषणान्तराणि बोद्धव्यानीत्यत आह—

क्षिपयत्यादि ; अत्र 'भुक्तिश्च मुक्तिश्च करस्थितैवे' त्युक्तेर्भोगसमुच्चिता मुक्तिश्च गृह्यते ।

तदुक्तं 'ब्रह्माण्डपुराणे'—

'तस्मादशेषलोकानां त्रिपुराराधनं विना ।
न स्तो भोगापवर्गौ तु यौगपद्येन कुत्रचित् ॥
तन्मनास्तद्गतप्राणस्तद्याजी तद्गतेहकः ।
तादात्म्येनैव कर्माणि कुर्वन्मुक्तिमवाप्स्यति ॥
एतद्रहस्यमाख्यातं सर्वेषां हितकाम्यया ।
आराधिता सैव नृणां भोगमोक्षफलप्रदा' ॥

इति ।

तथा रिपून्वैरिणः क्षिपयति संक्षिणोति । यथा सप्तशत्यां कात्यायनी देवशत्रुसुम्भासुरवधानन्तरं तां स्तुवतः सहर्षान्सेन्द्रान्देवान्प्रति स्वयमाह—

'वरदाहं सुरगणा ! वरं यं मनसेच्छथ ।
तं वृणुध्वं प्रयच्छामि जगतामुपकारकम्' ॥ (स०श०११-३५)

इत्येवमुक्त्वा वरदानोन्मुखा अग्रतोऽप्यरिवधप्रतिज्ञां चक्रे—

'इत्थं यदा यदा बाधा दानवोत्था भविष्यति ।
तदा तदावतीर्याहं करिष्याम्यरिसंक्षयम्' ॥ (स०श०११-५०)

इति ।

तथा विपदः पापकर्मजनिता मारीभयदुर्भिक्षाद्युपसर्गादिमनः शत्रुपराजयाद्यापदो वा हन्ति निराकरोति । यथा तत्रैव सुरथनाम्नो राज्ञः शत्रुपराजयतो राज्यभ्रंशादवसन्नस्य देवीप्रसादात्पुनाराज्यप्राप्तिः, तदुक्तम्—

'इति तस्य वचः श्रुत्वा सुरथः स नराधिपः ।
प्रणिपत्य महाभागं तमृषिं शंसितव्रतम् ॥
निर्विण्णोऽतिममत्वेन राज्यापहरणेन च ।
जगाम सद्यस्तपसे'-इत्यारभ्यपूजाबलिदानादिना' ॥ (स०श०१३-४-५)

'परितुष्टा जगद्धात्री प्रत्यक्षं प्राह चण्डिका।
यत्प्रार्थ्यते त्वयाभूप !' इति ।

'ततो वत्से नृपो राज्यमविभ्रंश्यन्यजन्मनि ।
अत्रैव च निजं राज्यं हतशत्रुबलं बलात् ।। (स०श०१३।१०-११)
स्वल्पैरहोभिर्नृपते! स्वं राज्यं प्राप्स्यते भवान् ।
हत्वा रिपूनस्खलितं तव तत्र भविष्यति ।।
मृतश्च भूयः संप्राप्य जन्म देवाद्विवस्वतः ।
सावर्णिको मनुर्नाम भवान्भुवि भविष्यति ।। (स०श०१३।१३-१४)
एवं देव्या वरं लब्ध्वा सुरथः क्षत्रियर्षभः ।
सूर्याज्जन्म समासाद्य सावर्णिर्भविता मनुः' ।। इति । (स०श०१३-१७)

तथा च 'कूर्मपुराणे' देवीवाक्यम्—

'ये तु सङ्गान्परित्यज्य मामेकं शरणं गताः ।
उपासते सदा भक्त्या योगमैश्वर्यमाश्रिताः ।।
सर्वभूतदयायुक्ताः शान्ता दान्ता विमत्सराः ।
अमानिनो बुद्धिमन्तस्तापसाः संशतव्रताः ।।
मच्चित्ता मद्गतप्राणाः मज्ज्ञानकथने रताः ।
संन्यासिनो गृहस्थाश्च वनस्था ब्रह्मचारिणः ।।
ये चोक्तैर्लक्षणैर्हीना अपि मन्त्रार्थजापकाः ।
तेषां नित्याभियुक्तानामापदां पर्वतानपि ।।
नाशयामितरां ज्ञानदीपेन नचिरादिह' ।

इति ।

तथाह विष्णुर्देवीं प्रति 'हरिवंशे'—

नृणांवन्धं वधं रोधं पुत्रनाशं धनक्षयमित्यारभ्यापत्परम्परामुपन्यस्य,—

'आपत्सु निखिलासु त्वं रक्षस्येव न संशयः' ।

इत्यन्तम् । 'वाराहे'ऽपि ब्रह्मादीनां वाक्यम्—

'शरणं त्वां प्रपद्यन्ते ये देवि! परमेश्वरि! ।
न तेषामापदः काश्चिज्जायन्ते क्वापि संकटे' ।। इत्यादि ।

अभियुक्तवाक्यमपि—

'आपदि किं करणीयं स्मरणीयं चरणयुगलमम्बायाः ।
तत्स्मरणं किं कुरुते ब्रह्मादीनपि च किङ्करीकरोति' ।।

इति । आधयश्चित्तपीडा व्यसनं च तान्दहति भस्मीकरोति । व्याधीन् दोषत्रय-वैषम्यनिमित्तान् असाध्ययाप्यादिभेदभिन्नान् रोगान् अपमृत्युकालमृत्य्वादीन् ज्वरा-दिरूपांश्च शमयति निवारयति । श्रुतिरपि—

'ज्ञात्वा देवं मृत्युमुखात्प्रमुच्यते' इति' ।

'सप्तशत्यां च'—

'एभिः स्तवैश्च मां नित्यं स्तोष्यते यः समाहितः ।
तस्याहं सकलां बाधां शमयिष्याम्यसंशयम् ।।
मधुकैटभनाशं च महिषासुरघातनम् ।
कीर्तयिष्यन्ति ये तद्वद्वधं सुम्भनिसुम्भयोः' ।। (१२ अ० १-२)

इत्यादि ।

'उपसर्गानशेषांस्तु महामारीसमुद्भवान् ।
तथा त्रिविधमुत्पातं माहात्म्यं शमयेन्मम' ।। (१२-७)

इति ।

सुखशब्देन तत्साधनानि स्रक्चन्दनवनितादीनि ज्ञेयानि, तेन सुखानि सुखसाधनानि प्रतनुते विस्तारयति । यथा प्रागुक्तं–सुदर्शनाख्यो राजपुत्रो देव्यनुग्रहाद्वधूं शशिकलां प्रापेति । तथा हठात्प्रसह्यान्तर्दुःखं हृद्बाधां दलयत्युत्पाटयति, इष्टस्याभीप्सितस्य दयिताप्रियपुत्रादेर्विरहं वियोगं पिनष्टि संचूर्णयति । यथा राज्ञः शर्यातेः कन्यायाः सुकन्याया वृद्धः पतिश्च्यवनर्षिरश्विभ्यां युवा स्वसमानरूपोऽकारि, ततः सा विशिष्य स्वपतिमजानती विरहदुःखिता भगवतीमाराध्यैव पतिं प्राप, इति कथा 'देवीभागवते' सप्तमस्कन्धे स्मर्यते—

'शरणं ते जगन्मातः! प्राप्तास्मि भृशदुःखिता ।
रक्षमेऽद्य सतीधर्मं नमामि चरणौ तव ।। इत्यादि ।
एवं स्तुता तया देवी महात्रिपुरसुन्दरी ।
हृदि तस्या ददौ ज्ञानं येनाधीनः पतिर्भवेत्' ।। इति ।

Slokas 14 & 20 missing. pp 33–34

षट्शतानि दिवा रात्रौ सहस्राण्येकविंशतिः ।
जपो देव्याः समुद्दिष्टः सुलभो दुर्लभो जडैः ।। इति । (वि० भै० १५६)

दक्षिणामूर्तिसंहितायाम्—

विना जपेन देवेशि! जपो भवति मन्त्रिणः ।
अजपेयं ततः प्रोक्ता भवपाशनिकृन्तनी ।। इति

यदाहुर्महेश्वरानन्दपादाः—

'यदि निजहृदयोल्लासं निर्णेतुं नित्यनिष्कलमिच्छा ।
मध्यत्रुटिस्त्रुटितव्याऽस्तं यतोः सोमसूर्ययोः' ।। (म० म० ५६) इति ।

शक्तिमनतिक्रम्य यथाशक्ति । व्यापारान्तरानासक्तत्वादहोरात्रमविच्छिन्नतात्पर्यसद्भावात् । अथ च जपोऽभीष्टत्वन्मन्त्रवर्णावर्तनरूपोऽक्षमालादिभिर्निवर्तनीयः । मन्त्रनामपारायणात्मको वा । पूजापि बाह्योपकरणरहिता तद्युक्ता च । तत्राद्या प्रोक्तलक्षणशब्दब्रह्मादिस्वभावस्वात्मदेवताविमर्शनपरिशीलनेनाविकल्पपराकाशसमावेशने तदन्तर्विश्रान्तिस्तत्र पूज्यपूजकादिभेदकलनाया विरहात् । तदुक्तमा'चार्याभिनवगुप्तपादैः'—

'पूजापूजकपूज्यभेदसरणिः केयं कथानुत्तरे
संक्रामः किल कस्य केन विदधे को वा प्रवेशक्रमः ।
मायेयं न चिदद्वयात्परतया भिन्नाप्यहो वर्तते
सर्वं स्वानुभवं स्वभावविमलं चिन्तां वृथा मा कृथाः' ।। इति ।

यद्वा—रूपादेर्भावसमूहस्यानवच्छिन्नपरचिदात्मनैकीकरणं पूजा । तदुक्तं—

'पूजा नाम विभिन्नस्य भावौघस्यापि सङ्गतिः ।
स्वतन्त्रविमलानन्तभैरवीयचिदात्मना' ।। इति ।

उक्तं चाभियुक्तैः—

स्वप्रकाशशिव एव भास्करस्तद्विमर्शविभवो मरीचयः ।
यैः स भासयति वेद्यमण्डलं तस्य पूजनमहन्तया मतिः ।। इति ।

विज्ञानभैरवेऽपि—

पूजा नाम न पुष्पाद्यैर्या मतिः क्रियते दृढा ।
निर्विकल्पे महा[1]व्योम्नि सा पूजा ह्यादराल्लयः ।। (१४७) इति ।

'परमार्चनत्रिंशिकायाम्'—

'बालिकारचितवस्त्रपुत्रिकाक्रीडनेन सदृशं तदर्चनम् ।
यत्र शाम्यति मनो न निर्मलं स्फीतचिज्जलधिमध्यमाश्रितम्' ।। २ इति ।

अपरा तु पञ्चोपचारादिबाह्योपकरणवलिता कुम्भस्थण्डिलयन्त्राद्याश्रया विचित्र-स्वभावा, इत्येवं प्रकारं जपं पूजां च गृहाण स्वात्मसात्कुरु ।

'न पुंसि न परे तत्त्वे शक्तौ मन्त्रं नियोजयेत् ।
पुंस्तत्त्वे जडतामेति परे तत्त्वे तु निष्फलः' ।।

इत्युक्तेः शक्तावेव मन्त्रोपलक्षितजपादेः समर्पणेन साफल्योक्तेरिति ।

पूजा द्विविधा । अनिर्माल्या (मानसपूजा) सनिर्माल्या (बाह्यपूजा) च । तदुक्तं 'तत्त्वसारे'—

'अनिर्माल्यं सनिर्माल्यमर्चनं द्विविधं मतम् ।
दिव्यैर्मनोभवैर्द्रव्यैर्गन्धपुष्पैः स्रगादिभिः ।।
यदर्चनमनिर्माल्यं दिव्यभोगापवर्गदम् ।
ग्राम्यारण्यादि संभूतैर्यागद्रव्यैर्मनोरमैः ।।
भक्तैर्यत्क्रियते सम्यक्सनिर्माल्यं तदर्चनम् ।
जातमात्राणि पुष्पाणि घ्रातान्येव निसर्गतः ।।
पञ्चभिश्च महाभूतैर्भानुना शशिना तथा ।
प्राणिभिश्च द्विरेफाद्यैश्चोष्यन्ते च न संशयः ।।
अतो निर्माल्यमित्युक्तम्' । इति ।।

अत्र चाद्ये यतीनामेवाधिकारः । यदाहागस्त्यः—

---

1. 'परे व्योम्नि' इति म० प० पाठः

'द्विविधं स्याल्लब्धमनोर्बाह्यान्तरमुपासनम् ।
न्यासितामान्तरं प्रोक्तम्' । इति ।।

यत्तु—

'मनसा पूजयेद्योगी पुष्पैर्वारण्यसम्भवैः ।
शिवार्थं पुष्पहिंसायां न भवेत्स तु हिंसकः' ।। इति ।

तज्जितेन्द्रिययतिपरम् ।

'परिव्राट् ज्ञानमात्रेण होमदानादिभिर्विना ।
सर्वदुःखपिशाचेभ्यो मुक्तो भवति नान्यथा ।।
पुण्यस्त्रियो गृहस्थाश्च मङ्गलैर्मङ्गलार्थिनः ।
पूजोपकरणैः कुर्युर्दद्युर्दानानि चार्हणाम् ।।
वानप्रस्थाश्च यतयो यद्येवं कुर्युरन्वहम् ।
संस्काराश्च निवर्तन्ते विद्यातिक्रमदोषतः ।।
आरूढपतिता ह्येते भवेयुर्दुःखभाजनम्' ।।

इति कुम्भसम्भवोक्तेरेव यतीनामसंयतेन्द्रियत्वं दोषायैवा तस्तेषां मानसपूजनमेव विहितमिति ।।

यद्वा मानसपूजने सर्वेषामधिकारः । यदुक्तं 'पाद्मे'—

'स्मरणे पूजने विष्णोस्तथा मानसपूजने ।
सदाधिकारः सर्वेषां महापातकिनामपि' ।। इति ।

गृहस्थानां तूभयत्राधिकारः । अन्तर्यजनं तु बाह्यार्चनस्याङ्गत्वेनोक्तं न केवलं । मानसार्चने निषेधदर्शनात् । यदुक्तं—

'न गृही ज्ञानमात्रेण परत्रेह च मङ्गलम् ।
प्राप्नोति चन्द्रवदने ! दानहोमादिभिर्विना ।।
गृहस्थो यदि दानानि कुर्याच्च जुहुयादपि ।
पूजयेद्विधिनानेन कः कुर्यादेतदन्वहम् ।।

नारण्यवासिनां शक्तिर्न ते सन्ति कलौ युगे ॥
गुरुभ्योऽपि च सर्वेभ्यः को वा दातुमपेक्षते ॥ इति ।

तस्मान्नित्या बाह्यपूजैव । सा च पञ्चविधा । तदुक्तं 'तन्त्रप्रकाशे'—

पूजा पञ्चविधा प्रोक्ता पञ्चरात्रादितन्त्रके ।
ताश्चाभिगमनाचोपादानेज्याध्याययोगकाः ॥
तत्राभिगमना नाम मन्त्रिभिः परिकीर्त्यते ।
संमार्जनोपलेपादि संस्कारो देवमन्दिरे ॥
उपादानं भवेद् देवपूजासाधनमेलनम् ॥
ततश्चापि भवेदन्या गन्धपुष्पादिभिः पुनः ॥
पीठपूजा च देवस्य साङ्गावरणपूजनम् ।
मन्त्रार्थभावनापूर्वं जपो मन्त्रस्य कीर्तनम् ॥
तच्छास्त्राध्ययनं सम्यक् स्वाध्यायो मन्त्रिभिः स्मृतः ।
गुरुदेवात्मनामैक्यं भावना योग उच्यते ॥
सालोक्यमपि सारूप्यं सामीप्यं र्आष्टिनामकम् ।
सायुज्यमपि पञ्चानां फलान्येवं विदुः क्रमात् ॥

अथवा परादिभेदेन त्रिधा पूजा । तदुक्तं 'नित्याहृदये'—

'तत्र नित्योदिता पूजा त्रिभिर्भेदैर्व्यवस्थिता ।
परा चाप्यपरा गौरि! तृतीया च परापरा ॥
प्रथमा द्वैतभावस्था सर्वप्रचरगोचरा ।
द्वितीया चक्रपूजा च सदा निष्पाद्यते मया ॥
एवं ज्ञानमये! देवि! तृतीया स्वप्रथामयी' । इति ।

तत्र—

न पूजा बाह्यपुष्पादिद्रव्यैर्या विहितानिशम् ।
स्वे महिम्न्यद्वये धाम्नि सा पूजा या परस्थितिः ॥

इति संकेतपद्धत्युक्त्या परास्थितिरूपोत्तमा, द्वितीया बाह्यचक्रावरणार्चा, तृतीया परापररूपा बहिरन्तःस्याद्वयचिद्धाम्नि लयभावनामयी । तदुक्तमभियुक्तैः—

'प्रकाशैकघने धाम्नि विकल्पान्प्रसवादिकान् ।
निक्षिपाम्यर्चनद्वारा वह्नाविव घृताहुतीः' ॥ इति ॥ २० ॥

एवं भगवत्यां जपार्चादिनिवेदनं विधाय स्तुतिकारो निर्विघ्नं तत्पूर्त्यै शान्तिश्लोकमारभते—

नन्दन्तु साधकाः सर्वे विनश्यन्तु विदूषकाः ।
अवस्था शाम्भवी मेऽस्तु प्रसन्नोऽस्तु गुरुः सदा ॥ २१ ॥

साध्नुवन्ति भोगमोक्षाविति साधकाः कुलयोगिनः कुलाचारपरायणत्वादित्यर्थः । श्रीमहात्रिपुरसुन्दर्याख्यायाः सर्वस्रोतःसाररूपायाः परदेवताया उपासकानामेवाम्नायेषु यामलसिद्धिरुद्घोष्यते । यदुक्तं 'श्रीमहेश्वरानन्दपादैः'—

'अहो संसारातिसुखातिशयः, अहो सुलभं मोक्षमार्गसौभाग्यम् ।
अुदितातङ्ककलङ्कः; अहो शिवयोगिनां यामलीसिद्धिः' ॥ इति । (म०म०६१)

तेषां लक्षणानि कादिमततन्त्रेषु प्रोक्तानि । तत्र श्रीकुलार्णवे—(९५०)—

'यो निन्दास्तुतिशीते[1]षु सुखदुःखारिबन्धुषु ।
सम आस्ते स[2] योगीन्द्रो हर्षामर्षविवर्जितः ॥
निस्पृहो नित्यसन्तुष्टः समदर्शी जितेन्द्रियः' । (९उ० ४५, ४६)

इत्यारभ्य—

पञ्चमुद्रा[3]समुत्पन्नपरमानन्दनिर्भरः ।
आस्ते सर्वत्र[4] योगीन्द्रः पश्यत्यात्मानमात्मनि ॥
अलिमांसाङ्गनासङ्गे यत्सुखं जायते प्रिये ! ।
तदेव[5]पुण्यं विदुषामसाधू[6]नां च पातकम् ॥ (९ उल्ला० ४५, ५०)

इत्यादि बहूक्तम् । तथा—

---

1. 'शीतोष्ण' । 2. समश्चेत्सुख'; 'समश्चेतत्' स तु' । 3. 'द्रव्य' । 4. 'य आस्ते स तु' । 5. 'मोक्षो' । 6. 'अबुधानां तु' । इति मु०पु० पाठान्तराणि (कालिकात्ता १९१७)

... समुद्दिष्टं भैरवेण महात्मना' ॥ (९ उ० ५५) इति ।

इति । लोकोऽत्रवैदिको मार्गः । तथा—

'न विधिर्न निषेधः स्यान्न पुण्यं न[2] च पापकम् ।
न स्वर्गो न[3] च नरकः कौलिकानां कुलेश्वरि !' ॥ (९ उ० ५८)

तथा—

'क्वचिच्छिष्टः क्वचिद्भ्रष्टः क्वचिद्भूतपिशाचवत् ।
नानावेशधरो योगी विचरेज्जगतीतले' ॥ ( ९ उ० ७४ )

तथा

'सर्वधर्माधिको लोके कुलधर्मः शिवोदितः ।
इति ये निश्चित्तधियः प्रोक्तास्ते कौलिकोत्तमाः' ॥ (९ उ० ८७)

इत्यादि । ते सर्वे साधकाः नन्दन्तु । उत्तरोत्तरं निरतिशयपरशाक्तामृतरसपान-सुखानुभवेन समृद्धा भूयासुरित्याशंसायां लोट् प्राप्तकाले वा । एवमग्रेऽपि । तथा हेत्वाभासोपन्यासैः सर्वोत्तमकौलधर्मदूषणशीलत्वाद्विदूषकाः कौलाचारनिन्दका नर-नशव इत्यर्थः । सर्वोत्तमत्वं यथा 'कुलार्णवे'—

'सर्वेभ्यश्चोत्तमा वेदा वेदेभ्यो वैष्णवं परम् ।
वैष्णवादुत्तमं शैवं शैवाद् दक्षिणमुत्तमम् ॥
दक्षिणादुत्तमं वामं वामात्सिद्धान्तमुत्तमम् ।
सिद्धान्तादुत्तमं कौलं कौलात्परतरं नहि ॥
गुह्याद्गुह्यतरं देवि ! सारात्सारं परात्परम् ।
साक्षात्पर[5]तरं देवि ! कर्णात्कर्ण[6]गतं कुलम् ॥
मथित्वा ज्ञानमन्[7]थेन वेदागममहार्णवम् ।
सर्वज्ञेन[8] मया देवि कुलधर्मः समुद्धृतः' ॥ (२उ० ७, - १०)

1. 'क्वचिद्दुष्टः' । 2. (ष्ट–)। 3. नात्र । 4. नैव नरकं। 5. शिवपदं । 6. कर्णात्कर्णगतं । 7. ज्ञानदण्डेन । 8. सारज्ञेन । * सारभूतः, सारज्ञानं महादेवि ! । इति मु०पु० पाठान्तराणि का० (१९१७)।

इत्यादि ।

भोगयोगात्मकं कौलं त[1]स्मात्सर्वाधि[2]कः प्रिये ।(२ उ० २३) इति ।

तद्दूषणे च यथा तत्रैव—

'बहवः कौलिकं धर्मं मिथ्याज्ञानविडम्बकाः ।
स्वबुद्धया[3] कल्पयन्तीत्थं पारम्पर्यविमोहि[4]ताः ।।
मद्यपानेन मनुजो यदि सिद्धिं लभेत वै ।
मद्यपानरताः सर्वे सिद्धिं गच्छन्तु पाम[5]राः ।।
मांसभक्षणमात्रेण यदि पुण्य[6]गतिर्भवेत् ।
लोके मांसाशिनः सर्वे पुण्यभाजो भवन्ति हि ।।
स्त्रीसंभोगेन[7] देवेशि! यदि मोक्षं[8] लभेत वै ।
सर्वेऽपि जन्तवो लोके मुक्ताः स्युःस्त्रीनिषेवनात्' ।।

(२ उल्ला० ११६,-११९)

इति । अज्ञानाद्ये वदन्ति ते विदूषकाः विनश्यन्तु विनष्टा अदृश्या भूयासुरिति पूर्ववत् । रहस्ययागस्य गोपनीयत्वात्तेषां तत् प्रवेशानर्हत्वाच्च तद्दर्शनाशंसा । वस्तुतस्तु कौलाचारहीनादीक्षितानधिकारिणामविधिना द्रव्यं सेवमानानां जनानां दोषात्कुलधर्मो दूष्यते इति तत्र तत्र शास्त्रेषु वितानितमस्ति । विधिविहितत्वे सौत्रामणीवाजपेयपौण्डरीकादिषु यागेष्विव दोषस्याश्रवणात् ।

तदुक्तम्—

'तस्मादविधिना मांसं मद्यं च नाचरेत्क्वचित्' ।

इत्यारभ्य—

तृणं चाप्यविधानेन च्छेदयेन्न कदाचन ।
विधिना गां द्विजं वापि हत्वा पापैर्नलिप्यते ।।
बहुनात्र किमुक्तेन सर्वसारं शृणु प्रिये! ।
जीवन्मुक्तिसुखोपायं कुलशास्त्रेषु गोपितम् ।।

---

1. अतः । 2. सर्वात्मकं, सर्वाधिकः । 3. 'सुबुद्धया' । 4. 'पारम्पर्यविवर्जिताः' । 5. 'यान्तु समीहितां' । 6. 'पुण्या' । 7. 'शक्तिसंभोगमात्रेण' । 8. 'यदि मोक्षो भवेत् वै' । इति मु०पु० पाठान्तराणि

कुलमार्गं समुद्दिष्टं भैरवेण महात्मना' ।। (६ उ० ५५) इति ।

इति । लोकोऽप्यवैदिको मार्गः । तथा—

'न विधिर्न निषेधः स्यान्न पुण्यं न[2] च पापकम् ।
न स्वर्गो न[3] च नरकः कौलिकानां कुलेश्वरि !' ।। (६ उ० ५८)

तथा—

'क्वचिच्छिष्टः क्वचिद्भ्र[2]ष्टः क्वचिद्भूतपिशाचवत् ।
नानावेशधरो योगी विचरेज्जगतीतले' ।। ( ६ उ० ७४ )

तथा

'सर्वधर्माधिको लोके कुलधर्मः शिवोदितः ।
इति ये निश्चितधियः प्रोक्तास्ते कौलिकोत्तमाः' ।। (६ उ० ८७)

इत्यादि । ते सर्वे साधकाः नन्दन्तु । उत्तरोत्तरं निरतिशयपरशाक्तामृतरसपान-सुखानुभवेन समृद्धा भूयासुरित्याशंसायां लोट् प्राप्तकाले वा । एवमग्रेऽपि । तथा हेत्वाभासोपन्यासैः सर्वोत्तमकौलधर्मदूषणशीलत्वाद्विदूषकाः कौलाचारनिन्दका नर-पशव इत्यर्थः । सर्वोत्तमत्वं यथा 'कुलार्णवे'—

* 'सर्वेभ्यश्चोत्तमा वेदा वेदेभ्यो वैष्णवं परम् ।
वैष्णवादुत्तमं शैवं शैवाद् दक्षिणमुत्तमम् ।।
दक्षिणादुत्तमं वामं वामात्सिद्धान्तमुत्तमम् ।
सिद्धान्तादुत्तमं कौलं कौलात्परतरं नहि ।।
गुह्याद्गुह्यतरं देवि ! सारात्सारं परात्परम् ।
साक्षात्पर[5]तरं देवि ! कर्णात्कर्ण[6]गतं कुलम् ।।
मथित्वा ज्ञानमन्[7]थेन वेदागममहार्णवम् ।
सर्वज्ञेन[8] मया देवि कुलधर्मः समुद्धृतः' ।। (२उ० ७, - १०)

---

1. 'क्वचिद्दुष्टः' । 2. (ष्ट–)। 3. नात्र । 4. नैव नरकं। 5. शिवपदं । 6. कर्णाकर्णिगतं । 7. ज्ञानदण्डेन । 8. सारज्ञेन । * सारभूतः, सारज्ञानं महादेवि ! । इति मु०पु० पाठान्तराणि का० (१६१७)।

इत्यादि ।

भोगयोगात्मकं कौलं त[1]स्मात्सर्वाधि[2]कः प्रिये ।(२ उ० २३) इति ।

तद्दूषणे च यथा तत्रैव—

'बहवः कौलिकं धर्मं मिथ्याज्ञानविडम्बकाः ।
स्वबुद्ध्या[3] कल्पयन्तीत्थं पारम्पर्यविमोहि[4]ताः ॥
मद्यपानेन मनुजो यदि सिद्धिं लभेत वै ।
मद्यपानरताः सर्वे सिद्धिं गच्छन्तु पाम[5]राः ॥
मांसभक्षणमात्रेण यदि पुण्य[6]गतिर्भवेत् ।
लोके मांसाशिनः सर्वे पुण्यभाजो भवन्ति हि ॥
स्त्रीसंभोगेन[7] देवेशि! यदि मोक्षं[8] लभेत वै ।
सर्वेऽपि जन्तवो लोके मुक्ताः स्युःस्त्रीनिषेवणात्' ॥

(२ उल्ला० ११६,-११९)

इति । अज्ञानाद्ये वदन्ति ते विदूषकाः विनश्यन्तु विनष्टा अदृश्या भूयासुरिति पूर्ववत् । रहस्ययागस्य गोपनीयत्वात्तेषां तत् प्रवेशानर्हत्वाच्च तदर्शनाशंसा । वस्तुतस्तु कौलाचारहीनादीक्षितानधिकारिणामविधिना द्रव्यं सेवमानानां जनानां दोषात्कुलधर्मो दूष्यते इति तत्र तत्र शास्त्रेषु वितानितमस्ति । विधिविहितत्वे सौत्रामणीवाजपेयपौण्डरीकादिषु यागेष्विव दोषस्याश्रवणात् ।

तदुक्तम्—

'तस्मादविधिना मांसं मद्यं च नाचरेत्क्वचित्' ।

इत्यारभ्य—

तृणं वाप्यविधानेन च्छेदयेन्न कदाचन ।
विधिना गां द्विजं वापि हत्वा पापैर्नलिप्यते ॥
बहुनात्र किमुक्तेन सर्वसारं शृणु प्रिये! ।
जीवन्मुक्तिसुखोपायं कुलशास्त्रेषु गोपितम् ॥

---

1. अतः । 2. सर्वात्मकं, सर्वाधिकः । 3. 'सुबुद्ध्या' । 4. 'पारम्पर्यविवर्जिताः' । 5. 'यान्तु समीहिताः' । 6. 'पुण्या' । 7. 'शक्तिसंभोगमात्रेण' । 8. 'यदि मोक्षो भवेत् वै' । इति मु०पु० पाठान्तराणि

इति । श्रीव्यासमुनिरपि—

'यज्ञार्थात्कर्मणोऽन्यत्र लोकोयं कर्मबन्धनः' ॥ (भ०गी० ३।९)

इत्यादि । तथा—

'आनन्दं ब्रह्मणो रूपं तच्च देहे व्यवस्थितम् ।
तस्याभिव्यञ्जकं द्रव्यं योगिभिस्तेन पीयते ॥

'समयाचारपद्धतावपि'—

'असंस्कृतं पशोःपानं कलहोद्वेगपापकृत् ।
मन्त्रपूजाविहीनं यत्पशुपानं तदेव हि ॥
पशुपानविधौ पीत्वा वीरोऽपि नरकं व्रजेत् ।
संस्कृतं बोधजननं प्रायश्चित्तं च शुद्धिकृत् ॥
मन्त्राणां स्फुरणं तेन महापातकनाशनम् ।
आयुः श्रीकान्तिसौभाग्यं ज्ञानं संस्कृतपानतः ॥
अष्टैश्वर्यं खेचरत्वं पतनं विधिवर्जितम् ॥
सौत्रामण्यां कुलाचारे मदिरां ब्राह्मणः पिबेत् ॥
अन्यत्र ब्राह्मणः पीत्वा प्रायश्चित्तं समाचरेत्' ॥

तथा मे मम शम्भोरियं शाम्भवी अवस्था शैवीदशाऽस्तु । सा च द्विधा, साभासा निराभासा च । तत्र स्वात्मविकासमये विश्वस्मिन् भेदप्रथाविदारणपूर्वं सर्वज्ञादि-गुणगणसंस्पर्शात्परापरशक्त्या वैश्वात्म्यवैचित्र्यावभासनं साभासत्वमुच्यते । तदुक्तं श्री 'नेत्रतन्त्रे'—

विप्रसार्यं तमात्मानं सर्वज्ञादिगुणैर्गुणी ।
साभासः कथ्यते देवि! शिवः परमकारणम् ॥
सर्वज्ञः परितृप्तश्च यस्य बोधस्त्वनादिमान् ।
स्वतन्त्रो ह्यप्रलुप्तश्च यश्चैवानन्तशक्तिकः ॥
शक्तिमान् गुणभेदेन स्वगुणान् विन्दते गुणी ।
पृथग्भेदविभेदेन नानात्वं विमृशेदिह ॥
स साभास इति प्रोक्तः' इति । (८।३५-३८)

निराभासावस्था तु—अहन्तेदन्ताविमर्शनिष्क्रान्ता परा मुक्तात्मा शिवदशा । तदुक्तं तत्रैव—

नाहमस्मि न चान्योऽस्ति निराभासस्तदा भवेत् ।
सावस्था परमा प्रोक्ता शिवस्य परमात्मनः ।।
नाहमस्मि न चान्योऽस्ति ध्येयं चात्र न विद्यते ।
आनन्दपदसंलीनं ज्ञानं समरसीगतम् ।। ८।३९,४०

इत्येतत्पदलाभाय द्वादशान्तादिपदभावनाया अकिञ्चित्करत्वात् । तदुक्तं तत्रैव—

नोर्ध्वे यानं प्रयुञ्जीत नाधस्तान्न च मध्यतः ।
नाग्रतः पृष्ठतः किञ्चित्पार्श्वयोरुभयोरपि ।।
नान्तः शरीरसंस्थाने न बाह्ये भावयेत्क्वचित् ।
नाकाशे बन्धयेल्लक्ष्यं नाधो दृष्टि निवेशयेत् ।।
न चाक्ष्णोर्मीलनं किंचिन्न किञ्चिद् दृष्टिबन्धनम् ।
अवलम्बं निरालम्बं सालम्बं न च भावयेत् ।।
नेन्द्रियाणि न भूतानि शब्दस्पर्शरसादि यत् ।
सर्वं त्यक्त्वा समाधिस्थः केवलं तन्मयो भवेत् ।।
सावस्था परमा मुक्ता शिवस्य परमात्मनः ।। ४१-४५

इति । यद्वा—शाम्भव्यवस्था शाम्भवसमावेशरूपा, सा च विकल्पक्रमोपारोहाभावेन झटिति तीव्रतमशक्तिपातवशादवश्यज्ञातव्यस्वात्मपरचित्तत्वसमापत्तिः तदुक्तं 'श्रीपूर्वशास्त्रे'—

अकिंचिच्चिन्तकस्यैव गुरुणा प्रतिबोधतः ।
उत्पद्यते य आवेशः शाम्भवोऽसावुदाहृतः ।। (मा०वि०४।९)

'श्रीतन्त्रालोकेऽपि'—

तेनाविकल्पा संवित्तिर्भावनाद्यनपेक्षिणी ।
शिवतादात्म्यमापन्ना समावेशोऽत्र शाम्भवः ।।

इति । समावेशश्च संकुचितचितेरसंकुचितचित्तैकात्म्यात् । तदुक्तं तत्रैव—

'जडेन यः समावेशः स प्रतिच्छन्दकाकृतिः ।
चैतन्येन समावेशस्तादात्म्यं नापरं किल ॥ इति ।

तस्य शाम्भवस्य मुकुरप्रतिबिम्बवद्विमर्शभेदात् त्रिधावस्थानात्तदुपायसमाविष्टस्तुरीयपदप्रास्तावनाख्यपरसंविद्रूपतयावभासते । तदुक्तं 'श्रीतन्त्रालोके'—

मत्त एवोदितमिदं मय्येव प्रतिबिम्बितम् ।
मदभिन्नमिदं चेति त्रिधोपायः स शाम्भवः ॥

तथा—

'जगत्सर्वं मत्तः प्रभवति विभेदेन बहुधा-
तथाप्येतद्रूढं मयि विगलिते त्वत्र न परः ।
तदित्थं यः सृष्टिस्थितिविलयमेकीकृतिवशाद-
नंशं पश्येत्स स्फुरति हि तुरीयं पदमितः' ॥ इति ।

यद्वा—शाम्भव्यवस्था शाम्भवमुद्रानुप्रवेशलक्षणा, इयं मुद्रा बहिरिन्द्रियव्यापृतत्वेऽपि अन्तःपरतत्त्वलक्ष्यैकावधानरूपा भैरवीमुद्रेत्यभिधीयते । तदुक्तं—

'अन्तर्लक्ष्यो बहिर्दृष्टिर्निमेषोन्मेषवर्जिता ।
एषासौ भैरवीमुद्रा सर्वतन्त्रेषु गोपिता' ॥ (कुलार्ण० ८।८५ इति) ।

एतन्मुद्रानुप्रवेशात्रसेणैव जगति संविन्मात्रसारत्वात्समयतापरामर्शोदयः स्यात्तदुपायश्च प्रदर्शितः । यथोक्तं 'तन्त्रालोके'—

'महासाहससंयोगे विलीनाखिलवृत्तिकः ।
पुञ्जीभूते स्वरश्म्योघे निर्भरीभूय तिष्ठति ॥
अकिञ्चिच्चिन्तकस्तत्र स्पष्टदृग्याति संविदम् ।
यद्विस्फुलिङ्गाः संसारभस्मदाहैकहेतवः ॥
तदुक्तं परमेशेन त्रिशिरोभैरवागमे ।
शृणु देवि! प्रवक्ष्यामि मन्त्रभूम्यां प्रवेशनम् ॥
मध्यनाड्योर्ध्वगमनं तद्धर्मप्राप्तिलक्षणम् ।
निरर्गलिपदातीतं प्रान्तकोटिनिरूपितम् ॥
अथः प्रवाहसंरोधादूर्ध्वक्षेपविवर्जनात् ।
महाप्रकाशमुदयज्ञानव्यक्तिप्रदायकम्' ॥

अनुभूय परे धाम्नि मात्रावृत्त्या पुरं विशेत्' ।। इति ।

तथा भैरवीमुद्राया निगूढार्थतयाभिधानमपि तत्रैव—

खस्थं विचारयेत्खं खं खस्थं खस्थेन संविशेत् ।
खञ्च त्यक्त्वा खमारुह्य खस्थं स्वस्थमिहोच्चरेत् ।।
खसव्यास्याधिकारेण पदस्थाश्चिन्मरीचयः ।। इति ।

श्री महेश्वरानन्दपादास्तु—अन्तर्बहिर्भावयौगपद्येन पूर्णसंवित्स्वभावा भैरवीत्याहुः । यथा—

अन्वयो द्विषडुमे यया धृता
सा निरावरणचिन्नभः पदा ।
स्पन्दमूर्तिहृतभेदडम्बरा
भैरवी त्वमसि विश्वमेलिनी ।। इति ।

तथा तैरेवोक्तं 'श्रीपरास्तोत्रे'—

'आनन्दोदयलक्ष्मणोरकलुषैरुपक्ष्मणोरुष्मलैः—
रक्षणोरुन्मिषितैः प्रताप्य पृथिवीमन्तःस्थलैकस्पृशः ।
पूर्णाहंप्रथनोत्सवाय सुधियो यामूर्ध्वमध्यासते
सा काचित्त्वमचिन्त्यसिद्धिरचला मुद्रा महत्युच्यसे' ।।

इति । तथा 'महानयप्रकाशे'—

महामेलापधर्मिण्यः कौण्डल्युन्मेषविग्रहाः ।
निरावरणचिद्व्योम धामस्याभान्ति नित्यशः ।।
आपूर्यस्वबलोद्रेकसमुत्थं भेदडम्बरम् ।
या स्थिता पूर्णविभवा निरावरणविग्रहा ।।
भैरवी सैव विख्याता मुद्रा सर्वसमुज्झिता ।
निस्तरङ्गविकाशात्मसामरस्यैकशालिनी ।।
आसां मेलापसिद्धानां देवीनां मुद्रिता सदा ।
मुद्रणेयं द्विधाभासमुद्रेयं भैरवात्मिका ।। इति ।

गृणात्युपदिशति तात्त्विकमर्थं महामन्त्रमुद्रावीर्यात्मकमिति गुरुः परमेश्वरः आदिनाथः स एवानुग्रहरूपत्वादनुग्राह्याननुगृह्णाति । यदुक्तं—

'यस्मान्महेश्वरः साक्षात्कृत्वा मानुष्यविग्रहम् ।
कृपया गुरुरूपेण मग्नाः प्रोद्धरति प्रजाः ।। इति ।

श्री मालिनीविजये'—

'स गुरुर्मत्समः प्रोक्तो मन्त्रवीर्यप्रकाशकः' । (१०।८)

था 'श्रीसिद्धामृते'—

'गुरोर्लक्षणमेतावदाद्यमान्त्यं च वेदयेत् ।
पूज्यः सोऽहमिव ज्ञानी भैरवो देवतात्मकः' ।। इति ।

सद्योगीश्वरमतेऽपि'—

'आद्यं चैव तथा चान्त्यमाचार्यो यस्तु विन्दति ।
स भवेद्योगिसङ्घस्य पूज्यः पूज्यतरो भवे ।।
अच्छिद्रं तस्य कुर्वन्ति कुर्वन्ति च अनुग्रहम् ।
वरं तस्य प्रयच्छन्ति पुत्रवत्पालयन्ति च ।।
पूज्यः सर्वत्र जायेत अहं देवि ! यथा तव ।
स ज्ञानी वै वरारोहे ! स भवेत्साधकोत्तमः ।।
सर्वेषामुत्तमः प्रोक्तो दैवज्ञः सर्वसिद्धिदः ।
स यतिः पण्डितश्चैव भैरवेशः प्रकीर्तितः' ।। इति ।

— "गृणते तत्त्वमात्मीयम्" इत्याद्यभियुक्तवचनरीत्या परदेवताया एव गुरुत्वा-ज्ञानाद्गुरुः, पारमेश्वरी अनुग्राहिका परा शक्तिस्तत्प्रमुखमेव कृतादिसिद्ध-विद्यावतारप्रसिद्धेः । यथोक्तं 'श्रीमालिनीविजये'—

शक्तिचक्रं तदेवोक्तं गुरुवक्त्रं तदुच्यते ।

शिरोभैरवेऽपि'—

'गुरुर्गुरुतराशक्तिर्गुरुवक्त्रगता भवेत्' इति ।

यद्वा—अख्यातिलक्षणमायातमोरोधकश्च गुरुः । यदुक्तं—

'गुकारस्त्वन्धकारः स्याद्रुशब्दस्तन्निरोधकः ।
अन्धकारनिरोधत्वाद्गुरुरित्यभिधीयते' ।। (कुलार्णव १७।७) इति ।

शिवसूत्रेष्वपि— 'गुरुरुपायः' (२।६) । तत्र वार्तिकम्—

प्राप्तावत्र गुरुः शक्तिरुपायः परमः स्मृतः ।
यतः सा शाम्भवी शक्तिरनुग्रहकरी सदा ।।
तत्पाताद्रक्षितो जन्तुः क्रियते भवनिस्पृहः ।
तदविष्ठितदेहस्य नीयते सद्गुरुं प्रति ।। शि०सू०वा २०-२१

शिवरूपमिति एवंरूपो गुरुः कुलाचार्यः सदा नित्यं प्रसन्नोऽस्तु प्रसादसंमुखत्वादनुजिघृक्षुर्भूयात् ।

'स्वप्रकाशवपुषा गुरुः शिवो यः प्रसीदति पदार्यमस्तके ।
तत्प्रसादमिह तत्त्वशोधनं प्राप्य मोदमुपयाति भावुकः' ।।

इत्यमृतानन्दयोगिप्रोक्तस्थित्या तस्य श्रीगुरोः प्रसादोन्मुखतया प्राप्ततत्प्रसादोऽहं सम्पूर्णज्ञानित्वेन चिन्मयश्रीसुन्दरीरूप एव संप्रकाशेयेत्यत्र तत्प्रसादाशंसाया आशयः । गुरुःप्रसादाधीना हि दीक्षया भोगमोक्षसिद्धिरतो देशिकपादप्रसादस्यावश्यंभाव आश्रयणीयस्तत्सपर्यानुजीवितमेव कौलिकरहस्यानामनुसन्धानयोग्यत्वमिति गुरुमतैव परमप्रयोजनम् । यदुक्तं—

'गुरुमत्तैव नः शास्त्रे परमं फलमुच्यते' ।

'महाभारतेऽपि'—

ऋतस्य दातारमनुत्तरस्य
निधिं निधीनां चतुरन्वयानाम् ।
ये नाद्रियन्ते गुरुमर्चनीयं
पापांल्लोकांस्ते व्रजन्त्यप्रतिष्ठान् ।। इति ।



'श्रीकुलार्णवे'—

शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन । इत्यादि ॥ २१ ॥

एवं शान्तिप्रार्थनायां कृतायामपि स्वात्मन्यसन्तोषादिव पुनः स्तोतुमुद्यतः श्रोतृहृदयदृढसंप्रत्तिपत्त्यर्थं दर्शनादिफलमाम्रेडयति—

दर्शनात्पापशमनी जपान्मृत्युविनाशिनी ।
पूजिता दुःखदौर्भाग्यहरा त्रिपुरसुन्दरी ॥ २२ ॥

अहमित्येव विभावयेद्भवानीमित्युक्तस्थित्या तादात्म्येन श्रीमहात्रिपुरसुन्दर्यात्मकस्वात्मभावनाख्यविमर्शनरूपाद् दर्शनात्स्वात्मसाक्षात्कारं प्राप्य भक्तानां पापस्य बन्धकारणमलत्रयस्याणवमायीयकार्माख्यस्य शमनी निःशेषोन्मूलिनी । "आत्मा वा अरे द्रष्टव्यः' (बृह० २।४।५) इति श्रुतेर्दर्शनार्हतया तत्साधनैः श्रवणमननादिभिः कृतसाक्षात्कारानुभवस्य "तरति शोकमात्मवित्" (छां० ७।१।३) 'ब्रह्मविद् ब्रह्मैव भवति' इत्यादिश्रुतिभिः शोकहेतुमलविगलनोत्तरं ब्रह्मभावपर्यवसानत्वोक्तेः ।

यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥
(मुण्ड० ३।१।३)

इति श्रुतेः । तथा—

सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग् ज्ञानेन ब्रह्मचर्येण नित्यम् ।
अन्तः शरीरे ज्योतिर्मयो हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः ॥
(मुण्ड० ३।१।५)

इति श्रुतेश्च । यद्गीतम्—

ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन ।(भ०गी०४।३७) इति ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ।(भ०गी०५।१०) इति ।
ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ।(भ०गी०४।१५) इति ।
सर्वं कर्माखिलं पार्थ ! ज्ञाने परिसमाप्यते ।(भ०गी०४।३३) इति च ।

अत्र कर्मशब्दो मलत्रयोपलक्षणं । 'काठकश्रुतिश्च'—

एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्धते नो कनीयान् । (बृ०४।४।२३)

इति 'वाजसनेयश्रुतिश्च'—

स न साधुना कर्मणा भूयान् नो वा एवासाधुना कनीयान् ।। (बृह० ४।४।२२) इति ।

तथा—

क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे । (मुण्ड० २।२।८) इति च । तत्र परसंवित्सतत्त्वस्य ज्ञानक्रियारूपत्वेन प्रकाशविमर्शस्वभावत्वम् । ततश्च ज्ञातृत्वविस्रष्टृत्वयोरन्यतरस्याप्यपरामृश्यमानतायामाणवमलोत्पत्तिः । तदुक्तं 'प्रत्यभिज्ञायाम्'—

स्वातन्त्र्यहानिर्बोधस्य स्वातन्त्र्यस्याप्यबोधता
द्विधाणवं मलमिदं स्वस्वरूपापहानितः ।। (३।२।५) इति ।

तेनानात्मन्यात्मत्वज्ञानमात्मन्यनात्मत्वज्ञानं चेति द्विधाणवमलं लक्ष्यते । 'भिन्नवेद्यप्रथात्रैव मायाख्यं जन्मभोगदम्' इत्युक्तेर्भिन्नवेद्यप्रथात्मकं मायीयं मलम् । 'कर्तर्यबोधे कार्मं च' इत्युक्तेः शुभाशुभवासनात्मना कर्मणा संभूतं कार्मं मलमिति त्रिप्रकारं मलं बन्धकारणं हेयपक्षे निक्षिप्तम् । तथा—

'अहमेव परो हंसः शिवः परमकारणम्' ।

इति नीत्या पूर्णाहंपरामर्शविश्रान्तस्य योगिनः स्वात्मदेवतानुसन्धानानवरतावर्तनात्मा मन्त्रजपः सदोदिततया परिस्फुरन्प्रवर्तते । यदनुवेधेन स्वैरालापमात्रस्याप्यनुसन्धानदार्ढ्यान्मन्त्रमयत्वं संपद्यते । तदुक्तम्—

'अकृत्रिमैतद्धृदयारूढो यत्किञ्चिदाचरेत् ।
प्राण्याद्वा विमृशेद्वापि स सर्वोऽस्य जपो मतः' ।। इति ।

श्रीशिवसूत्रेष्वपि—'कथा जपः' शि०सू० (३।७) इति । यद्वा—जपः कालनित्याजपो मन्त्रपारायणात्मा वा स प्राक् दर्शितः ।

तस्मात्— संयम्येन्द्रियसञ्चारं प्रोच्चरन्नादमान्तरम् ।
एवमेव जपः प्रोक्तो न तु बाह्यजपो जपः ।।

इत्यभियुक्तवचःस्थित्या नादानुसन्धानलक्षणाद्वा जपान्मृत्युं यमं विनाशयतीति मृत्युविनाशिनी कालहन्त्री । 'ज्ञः' 'कालकालो गुणी सर्वविद्यः' इति । 'तरति शोकं तरति पाप्मानमिति' (मुण्ड० ३।२।९) श्रुतेः । मृत्युपदमुपलक्षणं, तेन काला-

दिकलनवारिणीत्यर्थः ।

'मृत्युं च कालं च कलाकलापं
विकारजालं प्रतिपत्तिसाम्यम् ।
ऐकात्म्यनानात्म्यविकल्पजातं
तदा स पूर्वं कवलीकरोति' ।। इति ।

'श्रुतिश्च'—'ज्ञात्वा देवं मृत्युमुखात्प्रमुच्यते' इति ।

'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनम् ।
मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः' ।। (कठो० २।२५) इति च ।

तथा—

'पूजा हि विश्वभावानां परभैरवीयसंविदैकीकारः' ।

यदुक्तम्—

पूजा नाम विभिन्नस्य भावौघस्यापि संगतिः ।
स्वतन्त्रविमलानन्तभैरवीयचिदात्मना ।। इति ।

'श्रीविज्ञानभैरवेऽपि'—

'पूजा नाम न पुष्पाद्यैर्या मतिः क्रियते दृढा ।
निर्विकल्पे महाव्योम्नि सा पूजा ह्यादराल्लयः' ।। (१४७)

इति नीत्याविकल्पस्वात्मसंविल्लयलक्षणया पूजया पूजिता । अथ चेन्द्रियप्रीणनैर्द्रव्यैर्विहितस्वात्मपूजन इत्युक्त्या शब्दादिभिर्विशिष्टैर्द्रव्यैः स्वात्मदेवतातर्पणेन तज्जनितानन्दानां महानन्देन सामरस्यसम्पादनं नाम परा पूजा । तदुक्तं—

'इन्द्रियद्वारसंग्राह्यैर्गन्धाद्यैरात्मदेवताम् ।
स्वभावेन समाराध्य ज्ञातुः सोऽयं महामखः' ।। इति ।

'विज्ञानभैरवेऽपि'—

जग्धिपानकृतोल्लासरसानन्दविजृम्भणात् ।
भावयेद्भरितावस्थां महान*न्दमयो भवेत् ।। (७२)

* 'महानन्दस्ततो भवेत्' इति मु० मु० पाठः ।

इत्येवमुक्तलक्षणया पूजया वा पूजिता सती त्रिपुरसुन्दरी दुःखानि त्रिविधाध्यात्मिकादिक्लेशान् दौर्भाग्यानि विपाकोन्मुखदुष्कर्मफलानि च हरतीति हरा "ताच्छील्याद्यर्थेष्वच्"। इत्युत्तमाधिकारिजनाभिप्रायानुकूल्येनार्थः स्फुटीकृतः। इतरजनाभिप्रायेण तु बाह्यार्चानुकूलोऽर्थः सुगम एव ।। २२ ।।

इदानीमतिसुगोप्यां तुरीयविद्यां रहस्यभावेन सूचयन् सैव मुमुक्षुभिरपवर्गहेतुत्वात्समावेश्या । इत्याशयेनाह—

नमामि यामिनीनाथलेखालङ्कृतकुन्तलाम् ।
भवानीं भवसन्तापनिर्वापणसुधानदीम् ।। २३ ।।

अथ च सुधानदीति प्रथमान्तविशेषणपाठे,—भवानी भवानि ईमिति विश्लेष्यायमर्थः, नाहं मामि स्वात्मनि न सम्भवामि व्यचा*मीति भाविभव्यमहैश्वर्यसम्पदनुभवपरामर्शातिशयवैवश्येन सानन्दोक्तिरियम् ।

नन्वात्मन्यमाने को हेतुरित्याह—आम् इत्यङ्गीकारे, यतोऽभ्युपगमपूर्वं अहं भवानी कामेश्वरी ईमिति तुरीयसंविद्रूपा परब्रह्ममहिषी भवानि भवेयं समावेशप्रकर्षात्तन्मयतापत्तेः, अत्र विध्यादौ लोडुत्तमैकवचने रूपमिदं । कीदृशी भवस्य कामेश्वरस्य यः सन्तापः पित्रावमतत्वेन कृततनुत्यागभवानीवियोगजन्यो ज्वरस्तस्य निर्वापणे समुपशान्तौ सुधानदी अमृतसरिदिव, तथा चन्द्रलेखावतंसा इत्यत्र विशेषणस्य सन्तापनिर्वापणानुकूलत्वेनसहायसम्पदपि अभिहिता, तेन साध्याधिक्ये हि साधनपरिग्रहस्यादरणीयत्वात् सन्तापस्यातिशयत्वमिति ध्वन्यते । यद्वा जाग्रदादिदशालक्षणे भवे ये सन्तापा वेद्यवेदकक्षोभात्मकास्तेषां निर्वापणे 'त्रिपु चतुर्थं तैलवदासेच्यम्' (३।२०) इति शिवसूत्रोक्तनीत्या प्रसरता तुरीयचिद्रसेनाच्छुरितत्वात्, 'क्षोभप्रशान्तौ 'सुधानदीवाह्लादजननी, तथा कलाषोडशकोदयविलयस्थानत्वेन, इन्दुलेखयामाख्ययालंकृताः सञ्जीविताः कुन्तला मरीचयो यया सा शाक्तोल्लासानन्दचमत्कारोपेतेत्यर्थः । भवस्य संसारस्य आनयित्री जीवयित्री प्रकाशवितरणेनेति शेषं समानम् । यद्वा भवेत्याख्यातपदं ज्ञेयम् ।।

भवानीमित्यत्र विश्लिष्य भवानीत्यामन्त्रणपदं बोध्यम् । अर्थः प्राग्वत् त्वामीं तुरीयविद्यात्मश्रीकामकलारूपां महामायां संविद्वर्णाकारक्रमेण त्रिधावस्थितां नमामि संविशामीति सम्बन्धः । श्री'वामकेश्वरे'—

* काश्मीरेष्वेवास्य स्थितिः ।

बिन्दुं संकल्प्य वक्त्रं तु तदधस्तात्[1]कुचद्वयम् ।
तदधः सपरार्धं तु चिन्तयेत्तदधोमुखम् ।। (१।२०१)

इति व्याख्यातं श्रीजयद्रथाचार्यैः—तत्र संवित्क्रमेण व्याख्या यथा—बिन्दुं समरसितशक्त्यात्मकवेदनमात्ररूपं पराद्वयमयमविभागस्वभावमव्यपदेश्यं परतत्त्वं षट्त्रिंशत्तत्त्वात्मकस्य विश्वस्य व्यञ्जकत्वात्परामर्शात्मकत्वाद्विश्रान्तिधामतया प्राधान्याच्च वक्त्रं संकल्प्य तद्रूपतयानुसन्धाय, तदेव च स्वस्वातन्त्र्यादधस्ताद्बहिरुल्लिलसिषायां "नौम्यनुत्तरनाथस्य रश्मिद्वयमहं सदा । शिवशक्तीति विख्यातं" इति दृशा शिवशक्तिदशाधिशायितया स्वस्वरूपपरामर्शात्मककूजनात् कुचद्वयप्रायां विभागदशामापन्नं सत् 'प्राक्संवित्प्राणे परिणता' इति नीत्या ततोऽपि बहीरूपतायां सस्य परो हकारस्तस्यार्धमनच्ककला तद्रूपं सामान्यप्राणरूपताभासनपुरःसरं प्राणप्रमात्रादिभूमिकामवलम्बमानं ततोऽप्यधोमुखमावृत्त्या "तत एव सकारेऽस्मिन्स्फुटं विश्वं प्रकाशते" इति नीत्या सस्य प्रमेयात्मनो विश्वस्य परमर्धं पार्यन्तिकं कालाग्न्यन्तं धराधिरूढं रूपं प्राप्तं सच्चिन्तयेदित्यर्थः ।।

वर्णक्रमेण व्याख्या यथा—बिन्दुं वक्त्रं तद्रूपं संकल्प्य परामृश्य तदधस्तादपि कुचद्वयं तदाकारौ सूर्यचन्द्ररूपौ बिन्दू च । तदधोऽपि सस्य सकारस्य रेफरूपसमग्न्यात्मकं परमर्धमित्येवं सबिन्दुं तुर्यस्वरम् । आवृत्त्या तदधोऽपि सस्य परो हकारस्तस्यार्धमनच्कहककला तदधोऽपि सस्य परमर्धं रेफरूपं त्रिकोणाकारं योगिनीवक्त्रादिशब्दव्यपदेश्यमधोमुखमित्येवं निष्कलमन्त्रात्ममायबीजं चिन्तयेदनुसन्दध्यादित्यर्थः ।।

अथाकृतिक्रमचर्चा—इयं श्रीकामकलात्मा महात्रिपुरसुन्दरी बिन्दुत्रयसमष्टिरूपा प्रकाशविमर्शसामरस्याग्नीषोमात्मविमर्शशक्तिः सर्वोपास्यतयागमेषु गीयते । शुक्लरक्तमिश्रा हि बिन्दवः । तदुक्तं 'पुण्यानन्दयोगिभिः*'—

सितशोणबिन्दुयुगलं विविक्तशिवशक्तिसंकुचत्प्रसरम् ।
वागर्थसृष्टिहेतुः परस्परानुप्रविष्टविस्पष्टम् ।।
बिन्दुरहङ्कारात्मा रविरेतन्मिथुनसमरसाकारः ।
कामः कमनीयतया कला च दहनेन्दुविग्रहौ बिन्दू ।। (६।७) इति ।

---

१. 'तदधस्थं' । मु०पु० पाठ
* कामकलाविलासे

अन्यत्रापि—

मिहिरबिन्दुमुखीं तदधो लस-
च्छशिहुताशनबिन्दुयुगस्तनीम् ।
हसपरार्धकलारचनास्पदां
भजत नित्यमिमां परदेवताम् ।।

तथा—

अग्रबिन्दुपरिकल्पिताननां-
मन्यबिन्दुरचितस्तनद्वयीम् ।
नादबिन्दुरशनागुणास्पदां
नौमि ते परशिवे! परां कलाम् ।।

तथा—

एकारोर्ध्वगतो बिन्दुर्मुखं भानुरधोगतौ ।
स्तनौ दहनशीतांशू योनिर्हार्धकला स्मृता ।।

इत्याादिरहस्यम् । "मुखं बिन्दुं कृत्वा" इत्यादि श्रीमदाचार्यपादैरप्युपबृंहितम् । ऋग्वेदेऽपि—

चत्वार ईं बिभ्रति क्षेमयन्तो । इति

श्रुतेर्वेदसाररूपेयं श्रीविद्या । "द्वा मण्डला द्वास्तना बिम्बमेकं" (त्रि०म० ११) इत्यादिश्रुतिरपि बहिर्यागाश्रिततयान्यथा प्रतिपादयति (य ईं शृणोत्यलकं शृणोति ( ना०पू०ता० ४।८ ), यः प्राणिति ईं शृणोत्युक्थ्यम्, इत्यादि बहुषु श्रुतिषु प्रतिपादितम् । उक्तं च 'ज्ञानगर्भे'—

तवाम्ब! परमाक्षरी भवति रूपमेतद्वहि-
स्त्रिशत्प्रणवरूपतां समुपयाति हृत्कोठरे ।
अबेशमक्षतात्मभिर्जननि! बिन्दुनादात्म यद्-
विदन्ति तवहेलया त्वदनुसंस्मृतेर्योगिनः ।। इति ।

कीदृशीं यामिनीनाथलेखा चन्द्रलेखा तयालंकृताः शोभिताः कुन्तलाश्चिकुरा यस्यास्तामिति स्थूलाकारव्यानाभिप्रायेण । समनन्तरोक्तदिव्याक्षराभिप्रायेण तु

मूर्धनि-अर्धेन्दुनादात्मकसप्तकलोपेतामित्यर्थः । संवित्क्रमपक्षे तु "पुरुषे षोडशकले तामाहुरमृतां कलाम्" इति 'त्रिशिरोभैरवोक्तया' कालाग्न्यन्तविश्वस्याचिद्रूपत्वेन स्थितस्याप्यायनकारित्वाद्विश्वसंजीविनी चित्कला तत्प्रधानामित्यर्थः । अत एव भवे संसारे भक्तानां ये सन्तापा आध्यात्मिकाद्यास्तेषां निर्वापणे उपशान्तौ सुधानदीं शैत्याह्लादाप्यायकारित्वसादृश्यादमृतनदीमिवेत्यर्थः ॥ २३ ॥

अधुना स्वस्मिन्प्रमादप्रकृतिकत्वं द्योतयन्प्रामादिकदोषक्षमापनं देवीं प्रार्थयमान उपसंहरति—

मन्त्रहीनं क्रियाहीनं विधिहीनं च यद्गतम् ।
त्वया तत्क्षम्यतां देवि! कृपया परमेश्वरि ॥ २४ ॥

इति श्रीधर्माचार्यकृतौ पञ्चस्तव्यां घटस्तवस्तृतीयः ॥

मन्त्रः श्रीविद्यापञ्चदशयक्षरात्मा स एव कामनाभेदेन तत्तद्बीजसंयोजनादक्षरवृद्धौ षोडशाद्यक्षरपरिमिततया कूटवृद्धौ च त्रिचतुष्पञ्चादिकूटात्मतानेकधा भिद्यते । तदुद्धारस्तत्र तत्र तन्त्रेषु प्रदर्शितः । तदुक्तं 'ज्ञानार्णवे'—

'श्रृणु देवि! प्रवक्ष्यामि बीजं कामेश्वरीमतम् ।
सकला भुवनेशानी कामेशीबीजमुत्तमम् ।
अनेन सकला विद्याः कथयामि विशेषतः ।
शक्रधन्तातुर्यवर्णोऽयं कलमध्ये सुलोचने! ।
वाग्भवं पञ्चवर्णाढ्यं कामराजमथोच्यते ॥
मादनं शिवचन्द्राढ्यं शिवान्तं मीनलोचने! ।
चतुरक्षररूपं तु त्र्यक्षरा त्रिपुरा परा ॥

इत्यारभ्य—

सर्वदेवमयी साक्षात्सर्वसौभाग्यसुन्दरी ।
एतामुपास्य देवेशि! कामः सर्वाङ्गसुन्दरः' ॥

इत्यन्तम् ।

अत्र शक्तिकूटं कामेशीबीजरूपमित्यर्थः । इयं कामराजोपासिता भो प्रधाना कादिविद्येति नाम्ना ख्याता । हादिविद्या तु लोपामुद्रागस्त्योपासिता मोक्षप्रधाना ।

यथा—

'शृणु देवि! प्रवक्ष्यामि लोपामुद्राभिधां पराम् ।
कामराजाख्यविद्यायाः शक्तिं तुर्यं च सुन्दरि! ॥
हित्वा मुखे शिवेन्द्राढ्या लोपामुद्रा प्रकाशिता ।
अगस्त्योपासिता विद्या त्रैलोक्यक्षोभकारिणी ॥
एषा विद्या कामराजपूजितैव न संशयः ।
विद्याद्वयमिदं भद्रे! दुर्लभं भुवनत्रये' ॥ इति ।

श्रीमदाचार्यपादैरपि 'सौन्दर्यलहर्यामुक्तम्'—

'शिवः शक्तिः कामः क्षितिरथ रविः शीतकिरणः
स्मरो हंसः शक्रस्तदनु च परा मारहरयः ।
अमी हृल्लेखाभिस्तिसृभिरवसानेषु घटिता
भजन्ते वर्णास्तव जननि! नामावयवताम्' ३२ ॥

तथा—

'स्मरं योनिं लक्ष्मीं त्रितयमिदमाद्ये तव मना'वित्यादि ।

'श्रुतिरपि'—

'कामो योनिः कम*ला वज्रपाणिर्गुहा हसा। मातरिश्वाभ्रमिन्द्रः। (त्रिपुरो० ८)
पुनर्गुहा सकला मायया च पुरूच्येषा विश्वमातादिविद्या' । इति ।

श्रीषोडश्युद्धारोऽपि 'यामले'— (त्रिपु०म० ८)

'लक्ष्मीः परा भवनवाग्भवशक्तिबीजं
तारं च भूतिकमले कथिता च विद्या ।
कूटत्रयं च विपरीततया नियुक्तं
श्रीषोडशाक्षरमिहागमसुप्रसिद्धम् ॥ इति ।

इति

* कामकला । मु०पु० पाठः०

त्रोऽयं स्त्रीदैवत्यतत्वाच्चिद्रूपत्वाच्च विद्यापदेनोच्यते । अस्या विद्याया मन्वाद्यु-सकभेदात्पञ्चविंशतिर्भेदाः सन्ति । तत्रापि जागरादिकलाभेदाद् द्वादशविध-द्यानां चतुश्चत्वारिंशदुत्तरशतं भेदा भवन्ति । एवं षोडशीपञ्चम्यादिविद्यानां ापभेदा बहवः स्युरित्येत'च्छ्रीविद्यार्णवा'दिग्रन्थेषु द्रष्टव्यम् ।। यद्वा—'चित्तं मन्त्रः' ०सू०२।१ इति श्रीशिवसूत्रोक्तनीत्या चेत्यते विमृश्यते परं तत्त्वमिति कृत्वा, चित्तं दितं प्रासादादिबीजविमर्शरूपं, यत्परिशीलयतो नैरन्तर्येण दृढाभ्यासतः पूर्ण-रत्ता विजृम्भते तदेव मन्त्रः । यतस्तेन गुप्ततयान्तरभेदेन परदेवतास्वरूपं न्यते परामृश्यते, अतोऽस्योक्तमन्त्रस्य परदेवताभावस्फुरत्ता भेदरूपसंसार-शमनत्वेन मननत्राणधर्मतापि निरुच्यते । मननत्राणधर्माणो मन्त्रा इति ह्या-ायः । अथ चाराधकचित्तमेवासादितमन्त्रदेवतासामरस्यं मन्त्रः, न तु वर्णौ-योजनात्मा । "सहाराधकचित्तेन तेनैते शिवधर्मिणः" (२ नि० ११ का०) इति न्दोक्त्या तत्सामरस्ये सर्वज्ञतादिगुणवत्त्वं भवति ।

ी श्रीकण्ठसंहितायाम्'—

पृथङ्मन्त्रः पृथङ्मन्त्री न सिद्ध्यति कदाचन ।
ज्ञानमूलमिदं सर्वमन्यथा नैव सिद्ध्यति ।।'

'तन्त्रसद्भावेऽपि'—

मन्त्राणां जीवभूता तु या स्मृता शक्तिरव्यया ।
तया हीना वरारोहे ! निष्फलाः शरदभ्रवत् ।। इति ।

न स्वात्मदेवताया मन्त्रार्थत्वं मुख्यमिति गम्यते । वर्णौघसन्निवेशेषु तूपचारतः ।
त्त 'ज्ञानोत्तरे'—

उच्चार्यमाणा ये मन्त्रा न मन्त्रांश्चापि तान्विदुः ।
मोहिता देवगन्धर्वा मिथ्याज्ञानेन गर्विताः ।। इति ।

'महेश्वरानन्देनापि'—

पुण्ड्रेक्षोरिव मन्त्रस्य माधुर्यं हृदयस्पृशि ।
ऋजीषमानने तिष्ठत्यक्षरोच्चारलक्षणम् ।।

सेयमेवं भगवती संविद्देव्येव मन्त्र इति क्रमकेलिस्थितिः । तदुक्तं 'महार्थमञ्जर्याम्'—

मननमयी निजविभवे निजसंकोचे भये त्राणमयी ।
कवलितविश्वविकल्पा अनुभूतिः कापि मन्त्रशब्दार्थः ।। (४९)

इति भाषागाथाच्छाया । प्रथमसर्गे हि अधिकृता मन्त्रास्तैरनुगृहीतोऽणुसंघातो भोगं मोक्षं च लभन्ते ।

यदुक्तं 'श्रीपूर्वे'—जातमात्रे जगत्यथ ।

मन्त्राणां कोटयस्तिस्रः सार्धाः शिवनियोजिताः ।
अणुगृह्याणुसंघातं याताः पदमनामयम् ।। इति । (मा०वि०१।४१)

क्रिया नाम प्रकाशस्वभावभूतः कर्तृत्वास्यो धर्मो विमर्शस्वभावोऽनपायी न भिन्नः कश्चित् । सा हि स्वयं क्रियावन्तमाश्रयं विना स्वसत्तामलभमाना भिन्नतया स्थातु न प्रगल्भते । ततश्चान्तरीसंविच्छक्तिरेव कलनात्मा संकुचिततावविभासयिषया "प्राक्संवित्प्राणे परिणता" इति नीत्या शून्यातिशून्यपदावभासनपुरःसरं प्राणवृत्त्याश्रयाप्राणाद्यस्पन्दस्फुरत्तामयी बहिष्करणपरिस्पन्दपर्यन्तं प्रसरन्ती उत्क्षेपणावक्षेपणाकुञ्चनप्रसारणादिचेष्टया करचरणाद्यनुबन्धिनी साक्षात्कर्तुं योग्या परिस्फुरति । तदुक्तम्—

सैव संविद्बहिःस्वात्मगर्भीभूतौ क्रमाक्रमौ ।
स्फुटयन्ती प्ररोहेण प्राणवृत्तिरिति स्थिता ।।
संविन्मात्रं हि यच्छुद्धं प्रकाशपरमार्थकम् ।
तन्मेयमात्मनः प्रोज्झ्य विविक्तं भासते नभः ।।
तदेव शून्यरूपत्वं संविदः परिगीयते ।
नेति नेति विमर्शेन योगिनः सा परा दशा ।।
स एव खात्ममेयेऽस्मिन् भेदिते स्वीक्रियोन्मुखः ।
पतन्समुच्छलत्वेन प्राणस्पन्दोर्मिसंज्ञितः ।।
तेनाहुः किल संवित्प्राक्प्राणे परिणता तथा ।

श्रीदैवत्यतत्वाच्चिद्रूपत्वाच्च विद्यापदेनोच्यते । अस्या विद्याया मन्वाद्यु-
त्पञ्चविंशतिर्भेदाः सन्ति । तत्रापि जाग्रादिकलाभेदाद् द्वादशविध-
तुश्चत्वारिंशदुत्तरशतं भेदा भवन्ति । एवं षोडशीपञ्चम्यादिविद्यानां
बहवः स्युरित्येत'च्छ्रीविद्यार्णवा'दिग्रन्थेषु द्रष्टव्यम् ।। यद्वा—'चित्तं मन्त्रः'
१ इति श्रीशिवसूत्रोक्तनीत्या चेत्यते विमृश्यते परं तत्त्वमिति कृत्वा, चित्तं
ज्ञादादिबीजविमर्शरूपं, यत्परिशीलयतो नैरन्तर्येण दृढाभ्यासतः पूर्ण-
विजृम्भते तदेव मन्त्रः । यतस्तेन गुप्ततयान्तरभेदेन परदेवतास्वरूपं
परामृश्यते, अतोऽस्योक्तमन्त्रस्य परदेवताभावस्फुरत्ता भेदरूपसंसार-
न मननत्राणधर्मतापि निरुच्यते । मननत्राणधर्माणो मन्त्रा इति ह्या-
अथ चाराधकचित्तमेवासादितमन्त्रदेवतासामरस्यं मन्त्रः, नतु वर्णा-
त्मा "सहाराधकचित्तेन तेनैते शिवधर्मिणः" (२ नि० ११ का०) इति
ा तत्सामरस्ये सर्वज्ञतादिगुणवत्त्वं भवति ।

ण्ठसंहितायाम्'—

पृथङ्मन्त्रः पृथङ्मन्त्री न सिद्ध्यति कदाचन ।
ज्ञानमूलमिदं सर्वमन्यथा नैव सिद्ध्यति ।।'

द्भावेऽपि'—

मन्त्राणां जीवभूता तु या स्मृता शक्तिरव्यया ।
तया हीना वरारोहे ! निष्फलाः शरदभ्रवत् ।। इति ।

ात्मदेवताया मन्त्रार्थत्वं मुख्यमिति गम्यते । वर्णौघसन्निवेशेषु तूपचारतः ।
ज्ञानोत्तरे'—

उच्चार्यमाणा ये मन्त्रा न मन्त्रांश्चापि तान्विदुः ।
मोहिता देवगन्धर्वा मिथ्याज्ञानेन गर्विताः ।। इति ।

वरानन्देनापि'—

पुण्ड्रेक्षोरिव मन्त्रस्य माधुर्यं हृदयस्पृशि ।
ऋजीषमानने तिष्ठत्यक्षरोच्चारलक्षणम् ।।

सेयमेवं भगवती संविद्देव्येव मन्त्र इति क्रमकेलिस्थितिः । तदुक्तं 'महार्थमञ्जर्याम्'—

मननमयी निजविभवे निजसंकोचे भये त्राणमयी ।
कवलितविश्वविकल्पा अनुभूतिः कापि मन्त्रशब्दार्थः ।। (४६)

इति भाषागाथाच्छाया । प्रथमसर्गे हि अधिकृता मन्त्रास्तैरनुगृहीतोऽणुसंघातो भोगं मोक्षं च लभन्ते ।

यदुक्तं 'श्रीपूर्वे'—जातमात्रे जगत्यथ ।

मन्त्राणां कोटयस्तिस्रः सार्धाः शिवनियोजिताः ।
अणुगृह्याणुसंघातं याताः पदमनामयम् ।। इति । (मा०वि०१।४१)

क्रिया नाम प्रकाशस्वभावभूतः कर्तृत्वाख्यो धर्मो विमर्शस्वभावोऽनपायी न भिन्नः कश्चित् । सा हि स्वयं क्रियावन्तमाश्रयं विना स्वसत्तामलभमाना भिन्नतया स्थातुं न प्रगल्भते । ततश्चान्तरीसंविच्छक्तिरेव कलनात्मा संकुचितताववभासयिषया "प्राक्संवित्प्राणे परिणता" इति नीत्या शून्यातिशून्यपदावभासनपुरःसरं प्राणवृत्त्याश्रयाप्राणाद्यस्पन्दस्फुरत्तामयी बहिष्करणपरिस्पन्दपर्यन्तं प्रसरन्ती उत्क्षेपणावक्षेपणाकुञ्चनप्रसारणादिचेष्टया करचरणाद्यनुबन्धिनी साक्षात्कर्तुं योग्या परिस्फुरति । तदुक्तम्—

सैव संविद्बहिःस्वात्मगर्भीभूतौ क्रमाक्रमौ ।
स्फुटयन्ती प्ररोहेण प्राणवृत्तिरिति स्थिता ।।
संविन्मात्रं हि यच्छुद्धं प्रकाशपरमार्थकम् ।
तन्मेयमात्मनः प्रोज्झ्य विविक्तं भासते नभः ।।
तदेव शून्यरूपत्वं संविदः परिगीयते ।
नेति नेति विमर्शेन योगिनः सा परा दशा ।।
स एव खात्ममेयेऽस्मिन् भेदिते स्वीक्रियोन्मुखः ।
पतन्समुच्छलत्त्वेन प्राणस्पन्दोर्मिसंज्ञितः ।।
तेनाहुः किल संवित्प्राक्प्राणे परिणता तथा ।
अन्तःकरणतत्त्वस्य वायुराश्रयतां गतः ।। इति ।

सेयमेवं भगवती संविद्देव्येव मन्त्र इति क्रमकेलिस्थितिः । तदुक्तं 'महार्थमञ्जर्याम्'—

मननमयी निजविभवे निजसंकोचे भये त्राणमयी ।
कवलितविश्वविकल्पा अनुभूतिः कापि मन्त्रशब्दार्थः ।। (४९)

इति भाषागाथाच्छाया । प्रथमसर्गे हि अधिकृता मन्त्रास्तैरनुगृहीतोऽणुसंघातो भोगं मोक्षं च लभन्ते ।

यदुक्तं 'श्रीपूर्वे'—जातमात्रे जगत्यथ ।

मन्त्राणां कोटयस्तिस्रः सार्धाः शिवनियोजिताः ।
अणुगृह्याणुसंघातं याताः पदमनामयम् ।। इति । (मा०वि०१।४१)

क्रिया नाम प्रकाशस्वभावभूतः कर्तृत्वाख्यो धर्मो विमर्शस्वभावोऽनपायी न भिन्नः कश्चित् । सा हि स्वयं क्रियावन्तमाश्रयं विना स्वसत्तामलभमाना भिन्नतया स्थातुं न प्रगल्भते । ततश्चान्तरीसंविच्छक्तिरेव कलनात्मा संकुचितताववभासयिषया "प्राक्संवित्प्राणे परिणता" इति नीत्या शून्यातिशून्यपदावभासनपुरःसरं प्राणवृत्त्याश्रयाप्राणाद्यस्पन्दस्फुरत्तामयी बहिष्करणपरिस्पन्दपर्यन्तं प्रसरन्ती उत्क्षेपणावक्षेपणाकुञ्चनप्रसारणादिचेष्टया करचरणाद्यनुबन्धिनी साक्षात्कर्तुं योग्या परिस्फुरति । तदुक्तम्—

सैव संविद्बहिःस्वात्मगर्भीभूतौ क्रमाक्रमौ ।
स्फुटयन्ती प्ररोहेण प्राणवृत्तिरिति स्थिता ।।
संविन्मात्रं हि यच्छुद्धं प्रकाशपरमार्थकम् ।
तन्मेयमात्मनः प्रोज्झ्य विविक्तं भासते नभः ।।
तदेव शून्यरूपत्वं संविदः परिगीयते ।
नेति नेति विमर्शेन योगिनः सा परा दशा ।।
स एव खात्ममेयेऽस्मिन् भेदिते स्वीक्रियोन्मुखः ।
पतन्समुच्छलत्वेन प्राणस्पन्दोर्मिसंज्ञितः ।।
तेनाहुः किल संवित्प्राक्प्राणे परिणता तथा ।
अन्तःकरणतत्त्वस्य वायुराश्रयतां गतः ।। इति ।

अन्तःकरणतत्त्वस्येति बुद्धिप्रमातुरित्यर्थः ।

'श्रीमदीश्वरानन्दपादैर'प्युक्तम्—

क्रिया च

क्रियात्मको ह्ययं कालः क्रिया कारकमाश्रिता ।
षोढा च कारकग्रामः शक्तयात्मनि हि तिष्ठति ।।

इत्याद्युक्तयुक्त्या करणादिकारकस्वभावा सती क्रमात्कार्यतया परिस्फुरति । यदुक्तं 'तन्त्रवट्धानिकायाम्'—

'क्रिया स्वात्मपरिस्पन्दस्ततः प्राणोऽस्य तत्कृतम् ।
कालवैचित्र्यमित्येतत्संवित्स्पन्दाधिकं नहि' ।। ३३ इति ।

कार्यं च विधिनिषेधविषयतया बहुप्रकारं भवत्तत्तदवान्तरभेदभिन्नद्रव्यगुणाद्यनेकसहस्रविकल्पविक्षोभविचित्राशेषविश्वव्यवहारतया पर्यवस्यतीति । विमर्शशक्तेरेवायमेतावान्विजृम्भणोल्लासः । तथा—

'सन् हृदयप्रकाशो भवनस्य क्रियायां भवति कर्ता ।
सैव क्रिया विमर्शः स्वस्था क्षुभिता च विश्वविस्तारः' ।। इति ।

इति । 'श्रीमदाचार्याभिनवगुप्तपादैरपि'—

तथाहि संविदेवेयमन्तर्बाह्योभयात्मना ।
स्वातन्त्र्याद्वर्तमानैव परामर्शस्वरूपिणी ।।

इत्यत्र क्रियाशब्देन बाह्यपूजारम्भे निजाङ्गेषु करसंस्पर्शस्पन्दात्मकं न्यासजालमुपलक्ष्यते । स च पूर्वषोढान्यासो गणेशाद्यः । अन्तर्बहिर्मातृकान्यासो दशविधः श्रीकण्ठादितत्त्वान्तप्रपञ्चमहाषोढादिन्यासश्च बहुविधः स्यात् । तदुक्तम्—

एते सामान्यतः प्रोक्ताः सर्वत्र दश मातृकाः ।

Remaining part of the commentary ... missing

Sloka 1 to some part of comm. of Sloka 3 missing pp. 1-16



इति श्रुतेर्व्योम पराकाशस्तद्रूपा परब्रह्मस्वरूपेत्यर्थः । आकाश इति होवाचाकाशो ह्येवैभ्यो ज्यायानाकाशः परायणमिति' (छान्दो० १।९।१) छान्दोग्यश्रुतावाकाशशब्देन परब्रह्माभिधानान्नात्र भूताकाशपरत्वम् । "आकाशस्तल्लिङ्गात्" ( १-१-८-२२ ) इति ब्रह्मसूत्रे निर्णीतत्वाच्च । यदुक्तं 'कौर्मे'—

'इत्थं हि सा जगतो योनिरेका
सर्वात्मिका सर्वनियामिका च ।
माहेश्वरी शक्तिरनादिसिद्धा
व्योमाभिधाना दिवि राजतीव ॥' इति ।

यद्वा—ब्रह्माण्डपिण्डाण्डभेदेन द्विधा व्योम । "परमे व्योमन्प्रतिष्ठित:' (तैत्ति० ३।६) इति श्रुत्या प्रसिद्धं शिवाभिव्यक्तिस्थानं तद्रूपा । यदुक्तं 'स्वच्छन्दसंग्रहे'—

'द्वादशान्तं ललाटोर्ध्वं कपालोर्ध्वावसानकम् ।
द्व्यङ्गुलोर्ध्वं शिरोदेशात्परं व्योम प्रकीर्तितम् ॥'

इति । 'चिद्गगनचन्द्रिकायामपि'—

दृक्क्रियात्मशशिभानुमध्यगः
खेचरत्यनलदृष्टिधाम यः ।
यत्तदूर्ध्वशिखरं परं नभ-
स्तत्र दर्शय शिवं त्वमम्बिके ! ॥

इति । यद्वा—

'बैन्दवे परमाकाशे सच्चिदानन्दलक्षणे ।
निष्प्रपञ्चे निराभासे निर्विकल्पे निरामये ॥'

इत्युक्तेर्बिन्दुमये सर्वान्तरे सर्वानन्दमयाख्ये परस्मिन् व्योम्नि आसीनत्वात्परव्योमात्मा तद्रूपेत्यर्थः ।

तदुक्तं 'भैरवयामले'—

कलाविद्या पराशक्तेः श्रीचक्राकाररूपिणी ।

सदाशिवेन संपृक्ता सर्वतत्त्वातिगा सती ।
चक्रं त्रिपुरसुन्दर्या ब्रह्माण्डाकारमीश्वरि ! ॥ इति ।

यद्वा—सप्तभ्यः सागरेभ्यः परतरं परं व्योम, तत्र कृतयुगादिवर्षादारभ्य परिवृत्त्या षोडशेऽब्दे श्रीललिताया अवस्थानादित्युपचारात्तद्रूपेत्यर्थः॥ तदुक्तं 'कादिमते'—

'कृतादिवर्षादारभ्य प्रतिवर्षमिति स्थिताः ।
द्वितीयादिषु वर्षेषु क्रमात्ताः परिवृत्तिभिः ॥
षोडशेऽब्दे परे व्योम्नि ललिता सलिलाम्बुधौ ।
चित्रा च भवतीत्थं हि भजन्ते परिवर्तनम् ॥

इत्ययमत्रार्थः—

सुमेरुः सप्तद्वीपाः सप्तसागराः परव्योम चेति षोडशसु स्थानेषु कृतयुगादिवर्षे ललिताकामेश्वरीभगमालिनीत्यादिक्रमेण चित्रान्ताः षोडश नित्यास्तिष्ठन्ति । द्वितीये वर्षे ललिता जम्बुद्वीपेऽवतरति । कामेश्वरी तु क्षाराम्बुधिं प्रयाति । तत्रत्या भगमालिनी तु तदुत्तरं स्थानमाक्रमते । एवं स्थितया परव्योम्नि ज्वालामालिनी, मेरौ चित्रा तिष्ठति । तृतीये वर्षे क्षाराम्बुधौ ललिता इत्यादिक्रमेणोत्तरोत्तरस्थानाक्रमणेन जम्बुद्वीपे चित्रा तिष्ठतीत्यादि ।

यद्वा—व्योम शिवव्योमाख्यं परमात्मस्थानं । अयं भावः—अन्तर्भावौन्मुख्येनान्तकोटयां येयं परा कुण्डलिनी संविन्मात्ररूपामृताकारा सप्तदशीकला सैव 'त्रिशिरः शास्त्रे' शिवव्योमशब्देनोच्यते तद्रूपेत्यर्थः । तदुक्तं तत्रैव—

'शिवव्योमेति या संज्ञा परब्रह्मेति यत्पदं' इति । तथा— "आत्मस्थानं किमाख्यातं" इति भगवत्या पृष्टे "कुण्डल्याख्या तु सा प्रोक्ता सर्वाध्वोपरि वर्तिनी" इत्युपक्रम्य

प्रमाणोक्तेन रहितमुपमाभेदवर्जितम् ।
भूतव्योमपदातीतं चिद्व्योमान्तपदं परम् ॥
भावप्रत्ययसंरम्भमभावं परमा गतिः ।
शिवव्योम तु तज्ज्ञेयं सर्वाधारत्वलक्षणम् ॥
इत्यन्तं भगवतोत्तरितम् । 'विज्ञानभैरवेऽपि'—

व्योमाकारं स्वमात्मानं ध्यायेद् दिग्भिरनावृतम् ।
निराश्रया चितिः शक्तिः स्वरूपं दर्शयेत्तदा ।। (६२)

इति व्योमशब्देनात्र निराकृतित्वमुच्यते न तु तुच्छत्वं यतस्तत्पदं सर्वभावपूर्णमन्यथा ततो भावोत्पत्त्यभावप्रसंगः स्यात् । यद्वा— 'शून्योच्चाराद्भवेच्छिवः' इति विज्ञानभट्टारकोक्त्या शून्यार्थकेन व्योमशब्देनोन्मनाशक्त्याख्यमनाश्रितशिवपदमभिधीयते तत्स्वरूपोन्मना शून्यसंविन्मयी । शून्यशब्देन सर्वभावपूर्णत्वमभिप्रेतं न च रिक्तत्वम् । यदुक्तम्—

'अशून्यं शून्यमित्युक्तं शून्यं चाभाव उच्यते ।
देव्यभावः समुद्दिष्टो यत्र भावाः क्षयं गताः ।।' इति ।

'स्वच्छन्दसंग्रहेऽपि'—

'या शक्तिः कारणत्वेन तदूर्ध्वे उन्मना स्मृता ।
नात्र कालकलाभानं न तत्त्वं न च देवता ।।
स्वनिर्वाणं परं शुद्धं गुरुवक्त्रं तदुच्यते ।
शिवशक्तिरिति ख्याता निर्विकल्पा निरञ्जना ।।' इति ।

तथा अनुत्तरशक्तिरेव स्वस्वातन्त्र्यात्स्वरूपगोपनात्मसंकोचं जिघृक्षुर्वेद्यवेदकपरिच्छेदात्मकालुष्यग्रहणाद्बिन्दुर्विदिक्रिया स्वतन्त्रा प्रमातृरूपा भवतीति । अथच वेत्तीति बिन्दुर्विदिक्रियायां स्वतन्त्रो वेदयिता परमेश्वरः परप्रकाशात्मा शिवस्तद्रूपेत्यर्थः । अनेन परस्याः संविदो क्रियाशक्तिपर्यन्तेन विश्ववैचित्र्येण परिस्फुरन्त्या अपि "नहि द्रष्टुर्दृष्टेर्विपरिलोपः" (बृह० ४।३।२३) इति श्रुतेः स्वरूपविप्रलोपो न जायते इति द्योतितम् । तदुक्तं 'स्पन्दे'—

'जाग्रदादिविभेदेऽपि तदभिन्ने प्रसर्पति ।
निवर्तते निजान्नैव *स्वरूपादुपलब्धृतः ।।'

इति । अस्य बिन्दोर्द्वादशान्तभ्रूमध्यहृदयस्थानत्रयविश्रान्तिभेदात् नरशक्तिशिवात्मकत्वमप्यागमेषु गीयते । तदुक्तम्—

* 'स्वभावात्' मु० पु० पा० ।

'अत्रानुत्तरशक्तिः सा स्वं वपुः प्रकटस्थितम् ।
कुर्वत्यपि ज्ञेयकला कालुष्याद्बिन्दुरूपिणी ॥
उदितायां क्रियाशक्तौ सोमसूर्याग्निधामनि ।
अविभागः प्रकाशो यः स बिन्दुः परमो हितः ॥
तत्त्वरक्षाविधानेऽस्मिंस्तदुक्तं परमेशिना ।
हृत्पद्ममण्डलान्तःस्थो नरशक्तिशिवात्मकः ॥
बोद्धव्यो लयभेदेन बिन्दुर्विमलतारकः ॥' इति ।

शिवबिन्दुशब्देनाप्युच्यते । तदुक्तम्—

'अत्र प्रकाशमात्रं यत्स्थितं धामत्रये सति ।
उक्तं बिन्दुतया शास्त्रे शिवबिन्दुरसौ मतः ॥' इति ।

यद्वा—उन्मेषोपायपरिशीलनेन भ्रूमध्यादौ भासमानस्तेजोविशेषो बिन्दुस्तद्रूपा । तदुक्तं 'स्पन्दे'—

*अतो बिन्दुरतो नादो रूपमस्मादतो रसः ।
प्रवर्ततेऽचिरेणैव क्षोभकत्वेन देहिनाम् ॥' (४ नि० १२ का०)

इति । उन्मेषलक्षणं तु तत्रैव—

'एकचिन्ताप्रसक्तस्य यतः स्यादपरोदयः ।
उन्मेषः स तु विज्ञेयः स्वयं तमुपलक्षयेत् ॥' (४ । ११) इति ।

तथा भ्रुवोरुपरिभागे दीपाकारार्धमात्रोच्चारणकालो बिन्दुर्मान्त्रीया बिन्दुकला तद्रूपिणी । यदुक्तं 'योगिनीहृदये'—

'दीपाकारोऽर्धमात्रश्च ललाटे वृत्त/ इष्यते' । (१ पट० २८)

'स्वच्छन्दसंग्रहेऽपि'—

*'ततो ललाटगं वृत्तं बिन्द्वावरणमूर्ध्वतः ।
सूर्यकोटिप्रतीकाशमतिदीप्तं महद्गुणम् ॥

/ 'वृत्तमि' । 'प्रवर्तन्ते' मु०पु० पा० ।
*स्वच्छन्दतन्त्रे दशमे पटलेऽस्य विस्तारो द्रष्टव्यः १२१४ श्लोकादारभ्य १२-२६ पर्यन्तम्

तन्मध्ये दशकोटीनां संख्यायोजनपंकजम् ।
तत्कर्णिकायामासीनः शान्त्यतीतेश्वरः प्रभुः ॥
पञ्चवक्त्रो दशभुजो विद्युत्पुञ्जनिभाकृतिः ।
निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिरनुक्रमात् ॥
परिवार्य स्थिताश्चैताः शान्त्यतीतस्य सुन्दरि ! ।
वामभागे समासीना शान्त्यतीता मनोन्मनी ॥
पञ्चवक्त्रधराः सर्वाः दशबाह्विन्दुभूषणाः ।
बिन्दुतत्त्वं समाख्यातं कोट्यर्बुधशतैर्वृतम् ॥

इति । तथा—बिन्दुरूपैव पराशक्तिरुदेष्यत्तत्तत्परामर्शोल्लिलासयिषया नादात्मना प्रस्फुरति नदति स्वाभेदेन विश्वं परामृशति । सर्वान्तर्जीवकलात्वेन वा स्फुरतीति नादः ।

तदुक्तम्—

'योऽसौ नादात्मकः शब्दः सर्वप्राणिष्ववस्थितः ।
अध ऊर्ध्वविभागेन निष्क्रियेणावतिष्ठते ॥ इति ।

यद्वा—

नादः षोडशांशोच्चारणकालात्मास्फुटो ध्वनिर्मन्त्रकला तद्रूपा । बिन्दोरुपरि-अर्धचन्द्राद्या अष्टौ मन्त्रकलाः सन्ति तत्र तृतीया कला नाद इत्युच्यते । तदुक्तं 'स्वच्छन्दसंग्रहे'—

'रोधिन्याख्यं यदुक्तं ते नादस्तस्योर्ध्वसंस्थितः ।
पद्मकिञ्जल्कसङ्काशः सूर्यकोटिसमप्रभः ॥
पुरैः परिवृतोऽसंख्यैर्मध्ये पञ्चकलावृतः ।
इन्धिका दीपिका चैव रोधिका मोचिका तथा ॥
ऊर्ध्वगा मध्यगा तासां पञ्चमी परमा कला ।
चन्द्रकोटिसमप्रख्यं तन्मध्येऽर्बुधयोजनम् ॥
पद्ममध्ये समासीनमीश्वरं चोर्ध्वगामिनम् ।
चन्द्रायुतप्रतीकाशं पञ्चवक्त्रं त्रिलोचनम् ॥
इन्धिकाद्यैर्वृतं देवं शूलपाणिं जटाधरम् ।
तस्योत्सङ्गगतामूर्ध्वगामिनीं परमां शिवाम् ॥
ध्यायेदिति ॥

तथा—इन्दुलेखाऽर्धचन्द्रो बिन्दोरूर्ध्वभागे दीपाकृतिश्चतुर्थभागोच्चारणकालात्म। मन्त्रकला तद्रूपा । तदुक्तं 'स्वच्छन्दसंग्रहे'—

"अर्धचन्द्र" इत्यारभ्य

'ज्योत्स्ना ज्योत्स्नावती कान्तिः स्वप्रभा विमलापि च ।
अर्धचन्द्रोत्थिता ह्येताः कलाः पञ्च प्रकीर्तिताः ।।

इत्यन्तम् । तथा वाग्भवतनूर्वाग्भिवत्यस्मादिति वाग्भावमाद्यबीजं तदेव तनूः स्वरूपं यस्याः । तदुक्तम्—

'ए ओ मध्यगतं बीजं वाग्विधानाय केवलम् ।
रुद्रयामलतन्त्रे तु निर्दिष्टं परमाक्षरम् ।। इति ।

वाग्भवबीजं शृङ्गाटाकारं त्रिकोणं चेत्यर्थः । बिन्दोरेवोच्छूनतया विकसितीभावाद-नुत्तरानन्देच्छात्रयशृङ्गाटरूपेण परिणामो जायते तदेव दिव्यपीठम्, इच्छा-द्यात्मकपश्यन्त्यादिशक्तित्रयोत्पत्तिभूमिः । तदुक्तम्—

'अनुत्तरानन्दशक्तिरिच्छाशक्तौ नियोजिता ।
त्रिकोणमिति तत्प्राहुर्विसर्गामोदसुन्दरम् ।।
मेयमातृप्रमामानप्रसरैः संकुचत्प्रभम् ।
शृङ्गाटरूपमापन्नमिच्छाज्ञानक्रियात्मकम् ।।

इति । तथा 'वामकेश्वरे—'

'इच्छाशक्तिस्तदा सेयं पश्यन्ती वपुषा स्थिता ।
ज्ञानशक्तिस्तथा ज्येष्ठा मध्यमा वागुदीरिता ।।
ऋजुरेखामयी विश्वस्थितौ प्रथितविग्रहा ।
तत्संहृतिदशायां तु बैन्दवं रूपमास्थिता ।।
प्रत्यावृत्तिक्रमेणैव शृङ्गाटवपुरुज्ज्वला ।
क्रियाशक्तिस्तु रौद्रीयं वैखरी विश्वविग्रहा ।। इति ।
(६ विश्रामः ३८-४०)

'कामकलाविलासे'—

'उच्छूनं तच्च तदा* त्रिकोणरूपेण परिणतं स्पष्टम् ।
एतत् पश्यन्त्यादित्रितयनिधानं त्रिबीजरूपं च' ।। (२२, २३) इति ।

तथा—शिवस्य विमर्शात्मिका क्रियाशक्तिरेवादिक्षान्तविश्वजननी स्वशक्तित्वेनाज्ञातत्वान्माता मातृका । सा चाज्ञातत्वे बन्धदा । ज्ञातत्वे भोगमोक्षोभयसिद्धिदा । तदुक्तं 'स्पन्दे'—

'सेयं क्रियात्मिका शक्तिः शिवस्य पशुवर्तिनी ।
बन्धयित्री स्वमार्गस्था ज्ञाता सिद्ध्युपपादिका' ।। (४।१८) इति ।

तथा 'तन्त्रसद्भावे'—

'या सा तु मातृका लोके परतेजःसमन्विता ।
तया व्याप्तमिदं सर्वमाब्रह्मभुवनात्मकम् ।। इत्यादि,

स्कन्दोत्पादनेन मातृकेति । देवीपुराणवचनात्कुमारजननान्मातृकेत्युच्यते । यद्वा—मातैव मातृका "स्वार्थे क प्रत्ययः" । मिमीते उत्पादयति षडध्वजातमिति कृत्वा अशेषमन्त्रादिजननी "यतो वा इमानि भूतानि जायन्ते" इति श्रुतेः श्रीमहात्रिपुरसुन्दरीत्यर्थः । तथा—बालाया बीजत्रयस्यादौ "हस कलर डौ" इति व्यञ्जनाक्षरयोजनया कूटत्रयात्मिका विद्या जायते, सैव मातेत्युच्यते । लघुस्तवे मन्त्रपारायणोद्धारश्लोके मातृपदस्याभियुक्तैस्तथैव व्याख्यातत्वात् । तथा-माति हिरण्यगर्भाद्यवगमयति परिच्छिन्नतया सृजतीति वा माता । तस्यापि बोधदायिनी उत्पादयित्री वा । "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदान् प्रहिणोति तस्मै" इति श्रुतेः (श्वेताश्व ६।१।८) । यद्वा—मातैव मातृका पश्यन्त्यादिवाग्व्यापारजननी "प्राक् संवित्प्राणे परिणता" इति श्रीकल्लटोक्तनीत्याऽप्राणाद्यस्फुरत्तात्मजीवनात्मिका कुण्डलिनीशक्तिरूपा तत्स्थो नादभट्टारक एव परसूक्ष्मादिक्रमावलम्बनेन परादिवाग्रूपतामाश्रयते इत्यर्थः । तदुक्तम्—

* 'यदा' । मु. पु. पाठः

'मूलाधारात्प्रथममुदितो यश्च भावः पराख्यः
पश्चात् पश्यन्त्यथ हृदयगो बुद्धियुङ्मध्यमाख्यः ।
व्यक्ते वैखर्यथ रुरुदिषोरस्य जन्तोः सुषुम्णा
बद्धस्तस्माद्भवति पवनप्रेरिता वर्णसंज्ञा' ।।

इति । नित्यातन्त्रेऽपि'—

"मूलाधारे समुत्पन्नः पराख्यो नादसंभवः ।
स एवोर्ध्वतया नीतः स्वाधिष्ठाने विजृम्भितः ।।
पश्यन्त्याख्यामवाप्नोति तथैवोर्ध्वं शनैः शनैः ।
अनाहते बुद्धितत्त्वसमेतो मध्यमाभिधः ।।
तथा तथोर्ध्वनुन्नः सन् विशुद्धौ कण्ठदेशतः ।
वैखर्याख्यः" इति ।।

ब्रह्मादीनां तच्छक्तीनां भारत्यादीनां च सृष्ट्यादिसमष्टिरूपेण लक्षिता पराशक्तिरेव पश्यन्तीमध्यमावैखरीरूपेण व्यापृता मातृकेत्युच्यते ।

'अखिलमनाहतमूर्तिर्मात्रुत्तीर्णस्वरूपिणी भवति ।
कायति नानानामप्रपञ्चरूपेण मातृका देवी' ।।

इत्युक्तेः । अत्रेतिशब्दास्तत्तच्छब्दपरत्वद्योतकास्तेन पराकुण्डलिनीप्रबोधशालिनां तदुपासकानां व्योमादिपदाधिरूढ्या तत्र तत्र स्थानेषु तत्तच्छब्दाभिधेया पराशक्तिर्भगवत्येव वक्ष्यमाणविशेषणविशिष्टा विद्योतत इत्याशयः । तैश्च सा शक्तिर्मूलाधारादुदेत्योर्ध्वोर्ध्वपदभेदनक्रमेण पीठस्थानानि प्राप्य महापद्मवनविहरणासत्कर्णिकामध्यस्थचिच्चन्द्रमण्डलं विद्राव्य तत्सुधारसमास्वादयमाना चिदानन्दघनपरशिवसामरस्यसुखरूपानुभूयत इत्याह—निःष्यन्दमानेति । भाग्यवतां देशिककृपापाङ्गावलोकनेन त्वन्मार्गान्तःप्रविष्टतया सौभाग्योपेतानां जनानां मनसि चित्ते निष्यन्दमाना चिच्चन्द्रमण्डलात्क्षरन्ती या सुखबोधसुधा चिदानन्दघनामृतरसस्तेन स्वमात्मानं रूपयति प्रकाशयतीति स्वरूपा त्वं विद्योतसे प्रकाशाह्लादमयी प्रकाशसे । अथ च निरन्तरस्रवदमृतरूपानुभूयसे इत्यर्थः ।। ३ ।।

नन्वन्तर्गूढं वस्तु सत्कथमितरैर्ज्ञातुं शक्यते, इत्याशंक्य हेतुप्रदर्शनाशयेन भाग्यवत्त्वमनुवदन्नाह—

आविर्भवत्पुलकसन्ततिभिः शरीरैः—
निष्यन्दमानसलिलैर्नयनैश्च नित्यम् ।
वाग्भिश्च गद्गदपदाभिरुपासते ये
पादौ तवाम्ब ! भुवनेषु त एव धन्याः ॥ ४ ॥

हे अम्ब ! जगन्मातः ! भारतीपृथ्वीरुद्राण्यात्मकेच्छाज्ञानक्रियाशक्तीनां समष्टिरम्बेत्युच्यते । आविर्भवन्त्य प्रादुर्भवन्त्यः पुलकानामन्तःस्थत्वत्पादाब्जध्यानजन्यस्पर्शसुखमग्नहृदयत्वाज्जातानां रोमोद्गमानां सन्ततयः पंक्तयो येषां तैः शरीरैर्देहैः सुखस्पर्शोद्गाढतयोद्धर्षित्वं गात्रेषु स्वसंवेद्यमेव । तथा निष्यन्दमानानि भक्तिरसातिशयनिर्भरहृदयत्वाद्बहिरप्युच्छलत्वेन प्रस्रवन्ति सलिलान्यश्रुजलानि येषां तैर्नयनैर्नेत्रैरश्रुजलछद्मनाभ्यन्तरानन्दरसमेवान्तरमान्तं बहिरुद्वमद्भिरिवेत्यर्थः । तथा गद्गदपदाभिः स्खलितपदाभिर्वाग्भिः स्तुतिसूक्तिभिरुपलक्षिता ये भक्तजनास्तव पादौ त्वच्चरणाब्जद्वन्द्वं नित्यमुपासते सेवन्ते । त एव भुवने त्रिलोक्यां धन्याः सौभाग्यवत्त्वादमूल्यमेवञ्चकितधनं लब्धारः पुण्यवन्तः स्युः, त एव तेषां दुर्लभमानुष्यजन्मसाफल्यसंपत्तेः । एवं बाह्यैर्लिङ्गैरेव लिङ्गिनस्त्वद्भक्तरूपस्यावगमादिति भावः ॥ ४ ॥

इत्थं त्वद्विषयकं स्तुत्यादिकमत्यन्तदुर्लभमित्यभिदधानः सर्वस्मिन्नद्योग्यत्वं किमपि सूचयन्नाह—

वक्त्रं यदुद्यतमभिष्टुतये भवत्या—
स्तुभ्यं नमो यदपि देवि ! शिरः करोति ।
चेतश्च यत्त्वयि परायणमम्ब ! तानि
कस्यापि कैरपि भवन्ति तपोविशेषैः ॥ ५ ॥

हे देवि ! यद्वक्त्रं मुखं भवत्यास्तवाभिष्टुतये स्तुतीः कर्तुमुद्यतं भवतोद्यतं स्यात् । अत्र वक्त्रशब्देन तत्स्था वागुपलक्ष्यते तेन वाक् स्तोतुमुद्यच्छतीत्यर्थः । तथा यच्छिरो मूर्धा तुभ्यं नमस्करोति प्रणमति, तथा यच्चेतश्च मनोऽपि त्वयि परायणं त्वत्परं साकल्येनासक्तं त्वद्रूपपरीक्षणीयकस्य त्वद्गुणगणानांच दर्शनश्रवणसंस्कारजन्यस्मृत्यादिव्यापारप्रायतया चिदानन्दघनचमत्कारसामरस्यशालि स्यादित्यनेन त्रिधा कायवाङ्मानसभेदेन देव्या उपासनाभिहिता । हे अम्बेति प्राग्वत्

तान्युक्तसद्गुणगणस्पृहणीयानि वाक्शिरश्चेतांसि कस्यापि शक्तिपातपवित्रितहृदयस्याचरमजन्मनो विरलस्य "मनुष्याणांसहस्रेषु कश्चिद्यतति सिद्धये" इतिस्मृतेः (भ०गी० ७।३)। कैरप्यनिर्वाच्यैस्तपोविशेषैः प्राच्यैश्चान्द्रायणादिकृच्छ्रकर्मभिर्भवन्ति सम्पद्यन्ते। इत्यनेन देव्युपासनाया अत्यन्तदुर्लभत्वं सूचितं भवतीति ॥
॥ ५ ॥

अथ कुलदेव्या गमागमपदसञ्चारोदितत्वेन प्रकाशाह्लादात्माग्नीषोमीय रूपं परामृशन् स्वोपासाक्रमं सूचयति---

मूलालवालकुहरादुदिता भवानि!
निर्भिद्य षट्सरसिजानि तडिल्लतेव।
भूयोऽपि तत्र विशसि ध्रुवमण्डलेन्दु---
निःष्यन्दमानपरमामृततोयरूपा ॥ ६ ॥

हे भवानि! परब्रह्ममहिषि! भवानी पदस्यार्थः प्रागुक्तः। त्वं तडिल्लतेव तेजःपुञ्जरूपतया विद्योतमानत्वाद्विद्युद्वल्लीव तत्समानरुचिः कुण्डलिनीशक्तिस्वभावा मलं जन्माधाराख्यं स्थानमेवालवालकुहरं लतामूलकृतजलाधारबिलं तस्मादुदिता गुरूक्तयुक्तया उद्गता प्रबुद्धा सती षट् सरसिजानि कुलपद्मानि चतुर्दल-षड्दल दशदल-द्वादशदल-षोडशदल-द्विदलानि आधारस्वाधिष्ठानमणिपूरानाहतविशुद्धिआज्ञाख्यानि, आधारादिग्रन्थिभेदनप्रक्रिया तु श्रीवामकेश्वरतन्त्रोक्ता यथा-

'भुजङ्गाकाररूपेण मूलाधारंसमाश्रिता।
शक्तिः कुण्डलिनी नाम बिसतन्तुनिभा शुभा॥
मूलकन्दं फणाग्रेण दंष्ट्राकमलकन्दवत्।
मुखेन पुच्छं संगृह्य ब्रह्मरन्ध्रं समन्विता॥
पद्मासनगता स्वच्छा गुदमाकुञ्च्य साधकः।
वायुमूर्ध्वगतं कुर्वन् कुम्भकाविष्टमानसः॥
वाय्वाघातवशादग्निः स्वाधिष्ठानगतो ज्वलन्।
ज्वलनाघातपवनाघातैरुन्निद्रितोऽहिराट्॥
ब्रह्मग्रन्थिं ततो भित्वा विष्णुग्रन्थिं भिनत्त्यतः।
रुद्रग्रन्थिं विभिद्यैव कमलानि भिनत्ति षट्॥
सहस्रकमले शक्तिः शिवेन सह मोदते।
साचावस्था परा ज्ञेया सैव निर्वृतिकारणम्॥

इति । तथा 'रुद्रयामले' ......

'मूलाधारं महापद्मं चतुर्दलसुशोभितम् ।
वादिसान्तं स्वर्णवर्णं शक्तिब्रह्मपदं भजेत् ॥
क्षित्यप्तेजो मरुद्व्योम मा[1]नसं षट्सु पङ्कजे ।
क्रमेण भावये[2]द्विद्वान्मूलविद्याप्रसिद्धये ॥
मूलपद्मोर्ध्वदेशे च स्वाधिष्ठानं महाप्रभम् ।
षड्दलं राकि[3]णीं विष्णु कर्णिकायां स्मरेद्यतिः ॥
षड्दले वादिलान्तञ्च वर्णं ध्यात्वा सुरा[4]धिप ! ।
कन्दर्पवायुना व्याप्तं लिङ्गमूले भजेद्यतिः ॥
तदूर्ध्वे नाभिमूले च मणिकोटीसमप्रभम् ।
दशदलं योगधर्मं डादिफा[5]न्तान्तगं भजेत् ॥

लाकिनीसहितं रुद्रं ध्यायेद्योगादिसिद्धये ।
महामोक्षपदं दृष्ट्वा जीवन्मुक्तो भवेद्ध्रुवम् ॥
बन्धूकपुष्पसङ्काशं दलद्वादशशोभितम् ।
कादि[6]भान्तार्णसहितमीश्वरं काकिनीं भजेत् ।
तदूर्ध्वे [7]षोडशोल्लासि दले साक्षात् सदाशिवम् ।
महादेवीसाकिनीगं कण्ठे ध्यात्वा शिवो भवेत् ॥
विशुद्धाख्यं महापुण्यं धर्मार्थकाममोक्षदम् ।
धूम्रधूमा[8]कारं विद्युत्पुञ्जं भजति योगिराट् ॥
आज्ञानामाम्बु[9]जंशुभ्रं हिमकुन्देन्दुमन्दिरम् ।
हंसस्थानं बिन्दुपदं द्विदलं (भ्रू[10]द्वु१) कुलो भजेत् ॥
लक्षवर्णद्वयाढ्यं यद्बिन्दुयुक्तं मनोलयम् ।
तयोः स्त्रीपुंस्प्रकृत्याख्यं कोटिचन्द्रोज्ज्वलं भजेत् ॥' (२२ पट० २–१२)

---

1. मण्डलं । 2. भावयेन्मन्त्री । 3. राकिणी विष्णु कर्णिकायां । 4. सुराधिपः । 5. डादिफार्णान्तगं । इति मु.पु. पाठान्तराणि
6. कादिठाम्भार्णं । 7. षोडशोल्लासदले । 8. धूम्रधूमाकारं ।

न्युक्तसद्गुणगणस्पृहणीयानि वाक्शिरश्चेतांसि कस्यापि शक्तिपातपवित्रित-हृदयस्याचरमजन्मनो विरलस्य "मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये" इति-स्मृते: (भ०गी० ७।३)। कैरप्यनिर्वाच्यैस्तपोविशेषैः प्राच्यैश्चान्द्रायणादिकृच्छ्र-कर्मभिर्भवन्ति सम्पद्यन्ते। इत्यनेन देव्युपासनाया अत्यन्तदुर्लभत्वं सूचितं भवतीति ॥ ॥ ५ ॥

अथ कुलदेव्या गमागमपदसञ्चारोदितत्वेन प्रकाशाह्लादात्माग्नीषोमीय पं परामृशन् स्वोपासाक्रमं सूचयति--

मूलालवालकुहरादुदिता भवानि!
निर्भिद्य षट्सरसिजानि तडिल्लतेव ।
भूयोऽपि तत्र विशसि ध्रुवमण्डलेन्दु---
निःष्यन्दमानपरमामृततोयरूपा ॥ ६ ॥

भवानि! परब्रह्ममहिषि! भवानी पदस्यार्थः प्रागुक्तः। त्वं तडिल्लतेव तेजः-जरूपतया विद्योतमानत्वाद्विद्युद्वल्लीव तत्समानरुचिः कुण्डलिनीशक्तिस्वभावा जन्माधाराख्यं स्थानमेवालवालकुहरं लतामूलकृतजलाधारबिलं तस्मादुदिता क्तयुक्तया उद्गता प्रबुद्धा सती षट् सरसिजानि कुलपद्मानि चतुर्दल-षड्दल दल-द्वादशदल-षोडशदल-द्विदलानि आधारस्वाधिष्ठानमणिपूरानाहतविशुद्धि-ाख्यानि, आधारादिग्रन्थिभेदनप्रक्रिया तु श्रीवामकेश्वरतन्त्रोक्ता यथा-

'भुजङ्गाकाररूपेण मूलाधारंसमाश्रिता ।
शक्तिः कुण्डलिनी नाम बिसतन्तुनिभा शुभा ॥
मूलकन्दं फणाग्रेण दंष्ट्राकमलकन्दवत् ।
मुखेन पुच्छं संगृह्य ब्रह्मरन्ध्रं समन्विता ॥
पद्मासनगता स्वच्छा गुदमाकुञ्च्य साधकः ।
वायुमूर्ध्वगतं कुर्वन् कुम्भकाविष्टमानसः ॥
वाय्वाघातवशादग्निः स्वाधिष्ठानगतो ज्वलन् ।
ज्वलनाघातपवनाघातैरुन्निद्रितोऽहिराट् ॥
ब्रह्मग्रन्थिं ततो भित्वा विष्णुग्रन्थिं भिनत्त्यतः ।
रुद्रग्रन्थिं विभिद्यैव कमलानि भिनत्ति षट् ॥
सहस्रकमले शक्तिः शिवेन सह मोदते ।
साचावस्था परा ज्ञेया सैव निर्वृतिकारणम् ॥

इति । तथा 'रुद्रयामले'

'मूलाधारं महापद्मं चतुर्दलसुशोभितम् ।
वादिसान्तं स्वर्णवर्णं शक्तिब्रह्मपदं भजेत् ॥
क्षित्यप्तेजो मरुद्व्योम मा[1]नसं षट्सु पङ्कजे ।
क्रमेण भावयेद्वि[2]द्वान्मूलविद्याप्रसिद्धये ॥
मूलपद्मोर्ध्वदेशे च स्वाधिष्ठानं महाप्रभम् ।
षड्दलं राकि[3]णीं विष्णु कर्णिकायां स्मरेद्यतिः ॥
षड्दले वादिलान्तञ्च वर्णं ध्यात्वा सुरा[4]धिप ! ।
कन्दर्पवायुना व्याप्तं लिङ्गमूले भजेद्यतिः ॥
तदूर्ध्वे नाभिमूले च मणिकोटीसमप्रभम् ।
दशदलं योगधर्मं डादिफा[5]न्तान्तगं भजेत् ॥

लाकिनीसहितं रुद्रं ध्यायेद्योगादिसिद्धये ।
महामोक्षपदं दृष्ट्वा जीवन्मुक्तो भवेद्ध्रुवम् ॥
बन्धूकपुष्पसङ्काशं दलद्वादशशोभितम् ।
कादि[6]भान्तार्णसहितमीश्वरं काकिनीं भजेत् ।
तदूर्ध्वे[7]षोडशोल्लासि दले साक्षात् सदाशिवम् ।
महादेवीसाकिनीगं कण्ठे ध्यात्वा शिवो भवेत् ॥
विशुद्धाख्यं महापुण्यं धर्मार्थकाममोक्षदम् ।
धूम्रधूम्रा[8]कारं विद्युत्पुञ्जं भजति योगिराट् ॥
आज्ञानामाम्बु[9]जंशुभ्रं हिमकुन्देन्दुमन्दिरम् ।
हंसस्थानं बिन्दुपदं द्विदलं (भ्रू[10]द्वु१) कुलो भजेत् ॥
लक्षवर्णद्वयाढ्यं यद्विन्दुयुक्तं मनोलयम् ।
तयोः स्त्रीपुंस्प्रकृत्याख्यं कोटिचन्द्रोज्ज्वलं भजेत् ॥' (२२ पट० २–१२)

1. मण्डलं । 2. भावयेन्मन्त्री । 3. राकिणी विष्णु कर्णिकायां । 4. सुराधिपः । 5. डादिफार्णान्तगं । इति मु.पु. पाठान्तराणि
6. कादिठान्भार्णं । 7. षोडशोल्लासदले । 8. धूम्रधूमाकारं ।
9. अज्ञानामात्मजं । 10. [illegible]

इत्येतान्यारोहक्रमेण निर्भिद्य निर्दलय्य सर्वोर्ध्वेऽकुलाब्जकर्णिकायांपरशिवसामरस्य-सुखमनुभूय भूयः पुनरपि तत्राधारे विशसि अवरोहक्रमेण कुलकुण्डं प्रविशसि कीदृशी निष्यन्दमानं गमागमभूम्नाविद्रावितचिन्चन्द्रमण्डलविगलत्परमामृततोय-मत्युत्तमसुधारसस्तत्पूर्णं रूपं यस्याः सा तदुत्थामृतरसभरिता तेनैव स्रवदमृतरसेन कुलपथे धातुदेवताः सावरणा आप्लावयन्ती स्वस्थानमाश्रयसीत्यर्थः। तदुक्तं 'रुद्रयामले'।

'आदौ महाप्रकरणे मूले संयोजयेन्मनः।
गुदमेढ्रान्तरे शक्तिं तामाकुञ्च्य प्रबोधयेत्॥
लिङ्गभेदक्रमेणैव प्रापयेद्बिन्दुचक्रकम्।
*शम्भुना तां परां शक्तिमेकीभावां विचिन्तयेत्।
तत्रोत्थितामृतरसं द्रुतलाक्षारसोपमम्।
पाययित्वा परां शक्तिं कृष्णाख्यां योगसिद्धिदाम्॥
षट्चक्रभेदकं[1] तत्र सन्तर्प्यामृतधारया।
आनयेत्तेन मार्गेण मूलाधारं ततःसुधीः॥
एवमभ्यसमानस्य अहन्यहनि मारुतम्।
जरामरणदुःखाद्यैर्मुच्यते भवबन्धनात्॥ (१७ पट० ७८-८२)

इति। 'चिन्तामणिस्तवे'—

'कुलाङ्गनेयाप्यथराजवीथीः
प्रविश्य सङ्केतगृहान्तरेषु।
विश्रम्य विश्रम्य वरेण पुंसा
सङ्गम्य सङ्गम्य रसं प्रसूते॥ इति।

श्रुतिरपि—"अमृतस्य धारा बहुधादोहमानं चरणं नो लोके सुधितान्दधातु"। इति (सुदर्श० ५—त्रि०म०ना० ७।२)

'रुद्रयामलेऽपि'—"[2]प्रतिप्रयाणे प्रत्यक्षा अमृतव्याप्तविग्रहेति"। (२६ पट० २३) श्रूयते चामृतनिःष्यन्दप्रक्रियारुणोपनिषदि—

---

* शम्भुलाभां परां शक्तिमेकीभावैर्विचिन्तयेत्।

1, भेदकस्तत्र। 2, प्रतिप्रमाणे प्रत्यक्षाममृतव्याप्तविग्रहाम्।

'उत्तिष्ठत मा स्वप्त अग्निमिच्छध्वं भारताः ।
राज्ञः सोमस्य तृप्तासः सूर्येण सयुजोषसः ।। (अरुणो० १)

इत्यस्यार्थः, पृश्निनामका उपासका मिथ इदमाहुः-भारती सरस्वतीविद्यातत्सम्बन्धिनो हे भारताः श्रीविद्योपासकाः। उत्तिष्ठतोपास्तिक्रमे प्रवर्तध्वम्, मा स्वप्त प्रमत्ता मा भूत । अन्तर्भावितण्यर्थौ वा कुण्डलिनीकर्मकाविमौ धातू योजनीयौ । अग्निं स्वाधिष्ठानगताग्नितेजोमयीं कुण्डलिनीमिच्छध्वमिच्छादण्डेनाहत्योत्थापयध्वम् । सूर्येण सयुजा विशुद्ध्यनाहतचक्रयोर्मध्यवर्तिसूर्यसहितेन तेनाग्निना उषसो दग्धस्य द्रुतस्येतियावत् सोमस्योमया राजराजेश्वर्या सहितस्य राज्ञो राजराजेश्वरस्य सहस्रारीयचन्द्रमण्डलान्तर्गतस्य श्वार्थादमृतेन तृप्तासो भवत तृप्यत,–अग्निकुण्डलिनीमुत्थाप्य सूर्यकुण्डलिन्या संयोज्य ताभ्यां चन्द्रमण्डलं शिवशक्तिसामरस्येन द्रावयित्वा तदुत्थामृतधाराभिर्द्वासप्ततिसहस्रनाडीमार्गानापूर्य तृप्ता भवतेत्यर्थः । 'शारदायामपि'—

'आधारादगुणवृत्तशोभिततनुं निर्गत्वरीं सत्वराम्
भिन्दन्ती कमलानि चिन्मयघनानन्दप्रबोधोद्धुराम् ।
संक्षुब्धध्रुवमण्डलामृतकरप्रस्यन्दमानामृत–
स्रोतःकन्दलितामभन्दतडिदाकारां शिवां भावये ।।

इति । अधुना श्रीदेव्या अनभिमतकृत्यन्यथाकरणेनेन्दुमौलेरप्यद्यापि तत्फलवैगुण्यभाक्त्वमिति प्रवदन् पत्युरपि स्वाधीनीकरणाद्देव्याः सौभाग्योद्रिक्ततां द्योतयति—

दग्धं यदा मदनमेकमनेकधा ते
मुग्धः कटाक्षविधिरङ्कुरयाञ्चकार ।
धत्ते तदा प्रभृति देवि ! ललाटनेत्रं
सत्यं ह्रियेव मुकुलीकृतमिन्दुमौलिः ।।७ ।।

हे देवि ! कामेश्वरि ! पुरा किल तपसिस्थितो महादेवः समाधिनिष्ठायां शमैकरसिकतया स्वतन्त्रमुखो बभूव कदाचित्तारकासुरवधरूपदेवकार्यार्थं स्कन्दो-

सन्तादिभिस्तन्मनःक्षोभयामास । तदा तदकार्यधर्षणकार्यकरणात् सापराधं तं कामं कुपितः स भालनेत्रोत्थेन क्रोधाग्निना ददाह । तं मदनमेकं सन्तं हरक्रोधाग्निना दग्धं भस्मीकृतं यदा ते त्वदीयो मुग्धो विलाससुन्दरः कटाक्षविधिर्दृगन्तप्रेक्षणमनेकधा कटाक्षाणां बहुत्वाद्बहुधाङ्कुरयाञ्चकाराभिनवत्वेनोत्पादयाञ्चकार, एकस्मिन्नेव दग्धे तस्मिन् बहवः कामाः कामेश्वर्यास्तव कटाक्षेभ्यो जज्ञिरे इत्यर्थः। तपस्वितया नियमस्थत्वेन महादेवस्य विषयविरक्तस्यापि, अपाङ्गदृग्भिःक्षोभोत्पादे स्वाभिमुखीकरणादितिभावः । ब्रह्माण्डपुराणे भण्डासुरवधानन्तरं ब्रह्मादिभिःसुरैः संप्रार्थिता श्रीललिताम्बा शिवललाटनेत्रजाग्निप्लुष्टं कामं पुनरुज्जीवयाञ्चक्रे, इति कथा स्मर्यते । सा तत एव बोध्या तदा प्रभृति तत्कालमनङ्गदाहसमयमारभ्य इन्दुमौलिश्चन्द्रशेखरत्वात् संभावितो महादेवो ललाटनेत्रं भाललोचनं ह्रियेव तत्कृतकार्यानिर्वाहाल्लज्जयेव ननु हेत्वन्तरेण मुकुलीकृतमीषदुन्मीलितं धत्ते बिभर्ति इति यत् तत् सत्यं तथात्वेन सर्वैः प्रत्यक्षतया दृश्यमानत्वात् । लज्जितो हि लोकेऽधोदृष्टिं निक्षपतीति प्रसिद्धम् । इन्दुमौलिरित्यनेन संभाव्यमानसर्वसंमान्यत्वं ध्वन्यते । अत एव तादृशस्य तस्याकीर्तिप्रथनाद्धियाँ ललाटनेत्रमुकुलीकरणमुचितम् । सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यत इति स्मृतेः ।। (भ०गी० २।३४) ।। ७ ।।

त्वत्सम्बन्धात् प्राक् शिवस्याज्ञातप्रायत्वमेवासीदिति कथयन् देव्या एव महिमातिशयमुपक्षिपति—

अज्ञातसम्भवमनाकलितान्ववायं
भिक्षुं कपालिनमवाससमद्वितीयम् ।
पूर्वं करग्रहणमङ्गलतो भवत्याः
शम्भुं क एव बुबुधे गिरिराजकन्ये ! ।। ८ ।।

सम्भवत्यस्मादिति सम्भवो मातापितृरूपः, अज्ञातोऽविदितः संभवो यस्य तमज्ञातसम्भवमविदितमातापितृकं, संभवो निवासस्थानं वा तेनाज्ञातनिवासं भिक्षोरनिकेतनत्वात् । अनाकलितोऽनवगतोऽन्ववायो वंशः प्रसिद्धपूर्वपुरुषपरम्परा यस्य तमनाकलितान्ववायमकुलत्वात् । तदुक्तम्— अकुलस्यादिदेवस्य कुलप्रथनशालिनी' इति । तथा भिक्षुं भिक्षणशीलमाश्रमातिक्रान्तत्वात् । अत एव कपालिनं तदुचितकपालपात्रधारिणं निःस्वमित्यर्थः । समुद्रजन्यं हि तत्पात्रं भिक्षुभिर्धार्यते

इति प्रसिद्धम् । तथावाससं कौपीनैकशेषत्वाद् दिगम्बरं नग्नमित्यर्थः । अविद्यमाना द्वितीया भार्या यस्य तमद्वितीयमस्त्रीकमेतादृशं प्रत्यभिज्ञापकलक्षणरहितं शम्भुं हे गिरिराजकन्ये ! हिमालयदुहित्रि ! भवत्यास्तव पर्वतराजपुत्र्या एव करग्रहणं विवाहस्तद्रूपान्मङ्गलतः शुभकार्यात् पूर्वं प्राक् को बुबुधे ज्ञातवान्, प्राक्तस्याज्ञातत्वान्न कोऽपीत्यर्थः । एव शब्दोऽवधारणार्थोभिन्नक्रमस्तेन गङ्गेन्दुकलादिधारणान्न तस्य ख्यातिसम्भवः । तदुक्तं— "शक्तया विना शिवे सूक्ष्मे नाम धाम न विद्यते" इति । यद्वा कः प्रजापतिरेव शम्भुं बुध्यतेस्म नान्यस्तद्व्यतिरिक्तः तस्मै ज्ञानसाधनस्यवेदस्य प्रहितत्वादिति एव शब्दस्यान्ययोगव्यवच्छेदकत्वात् । केवलं त्वत् पाणिग्रहणादेव त्रिलोक्यां कीर्त्यैश्वर्यादिमहिमातिशय इति द्योतितम् । एवं पूर्वार्धोक्तानि सर्वाण्येव विशेषणानि अज्ञातत्वोपबृंहणानि, त्वत्करग्रहणरूपंत्वेकमेव विशेषणं सर्वोत्कृष्टं शिवप्रत्यभिज्ञाकर्रमिति गिरिराजकन्ये ! इत्यनेन सूच्यते। लोकेऽप्यज्ञातस्य जनस्य राजकन्यावरणसम्बन्धात् प्रतीतिदर्शनादिति भावः ॥ ८ ॥

अथ च वस्तुतोऽनादित्वात् ब्रह्मणः अजत्वादिधर्मिणः जन्माद्यभावस्तस्मादज्ञातसम्भवम् । तथा च श्रुतिः "स वा एष महानजोऽजरोऽमृतोऽभयोब्रह्मेति" तथा 'न जायते म्रियते वा विपश्चिदिति' । 'न चास्य कश्चिज्जनिता न चाधिप' इति च। एवं जन्माभावे देहाद्युपाधिकृतकुलसम्बन्धोऽपिनास्तीत्याह अनाकलितान्ववायमिति अमूर्तत्वादसङ्गत्वाच्च उपाध्यसंसर्गे गोत्रसम्बन्धरहितम् "असङ्गो नहि सज्ज्यते" इति श्रुतेः । तथा वर्णाश्रमाद्युत्तीर्णत्वात् भिक्षुं तत्सदृशत्वात् "तदवर्णमगोत्रमिति" श्रुतेः । कं सुखं भूमानन्दघनस्वरूपं पालयतीति कपालिनं स्वानन्दस्वभावादप्रच्युतमित्यर्थः । "आनन्दो ब्रह्मेतिव्यजानाद्" इति "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति श्रुतेः । तथाविद्यकावरणस्याविद्यमानत्वादवाससं ब्रह्मणो हि देशाद्यनवच्छेदादमूर्तत्वाच्च न केनचिदावरणं कर्तुं शक्यं, प्रत्युत तेनैव सर्वस्य प्रपञ्चस्याकाशवत् स्वान्तःक्रोडीकृतत्वेनाच्छादितत्वम् । तथा च श्रुतिः "नैनेन किञ्चनानावृतम्" इति "ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्" इति च। तस्याज्ञेयत्वे हेतुभावेन विशेषणमाह अद्वितीयमिति । "अथात आदेशो नेतिनेति', 'नेह नानास्तिकिञ्चनेत्या'दि—श्रुतिवाक्यैर्ब्रह्मव्यतिरिक्तस्य प्रपञ्चस्यमिथ्यात्वदर्शनादद्वैतता सिद्धयति तस्मात्तत्वतो द्वितीयाभावादैकात्म्यप्रत्ययसारम् । "एकमेवाद्वितीयंब्रह्म" ऐतदात्म्यमिदं सर्वं यत्र त्वद्वैतमभूत् "तत् केन कं पश्येत् केन कं विजानीयात्' इत्यादि श्रुतेःस्पष्टमन्यत् । एवंभूतस्य तस्य शक्तिद्वारैव प्रत्यभिज्ञानत्वात् शिवसमापत्तौ शक्तिरेवोपाय इति भावः ।

एवं शिवस्य निजैश्वर्यस्फारं प्रपञ्चयन् शक्तिमहिमसारतां ध्वनयति—

चर्माम्बरञ्च शवभस्मविलेपनं च
भिक्षाटनं च नटनं च परेतभूमौ ।
वेतालसंहतिपरिग्रहता च शम्भोः
शोभां बिभर्ति गिरिजे ! तव साहचर्यात् ।। ९ ।।

हे गिरिजे ! पर्वतराजपुत्रि ! तव शक्तिरूपाया नटेश्वर्याः साहचर्यात् सहचरीभावाच्छम्भोः शिवस्य चिदम्बरनटस्य समनन्तरोक्तवस्तुजातं शोभां कान्तिं बिभर्ति शृङ्गाररसं पुष्णातीत्यर्थः । तत् किमित्याह-चर्माम्बरं सिंहगजयोश्चर्माजिनं परीधानोत्तरीयरूपमम्बरम् वस्त्रं तथा दग्धानां शवानां भस्मभिर्भूतिभिर्विलेपनमुद्धूलनं, तथा भिक्षाटनमन्नपूर्णेश्वरीसमीपे भिक्षार्थमटनं पर्यटनं परेतभूमौ श्मशानभूमौ नटनंनाट्यंचेति, तथा वेतालानां भैरवादीनां भीषणाकृतीनां संहतयो वृन्दानि परिग्रहः परिजनो यस्य तस्य भावो वेतालसंहतिपरिग्रहता वेतालेत्युपलक्षणं तेन भूतादिसहचारिता च । चाः समुच्चये, न केवलमेकैकं वस्तु, अपितु युगपदपि सर्वं शोभत इति सूच्यते । अत्राप्यामन्त्रणपदं साभिप्रायम् । लौकिके नाट्ये विरसमपि पुरुषचेष्टितममनोहार्यपि विलासिनीसाहचर्यादत्याह्लादरसोत्कर्ष (पोषक) दायित्वेन प्रेक्षकाणां मनांसि मोहयतीति । एतदाशयेनाहुरभियुक्ताः—

'जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः
प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः ।
भर्तुर्नृत्तानुकारे जयति निजतनुस्वच्छलावण्यवापी-
सम्भूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः ।। इति ।

अथच चर्यतेऽनेनेति चर्म ज्ञानक्रियेच्छाशक्तिरश्मिपुञ्जस्तदेवाम्बरमावरणं रवेरिव स्वकिरणसमूहो येन परितः प्रसरता स्पष्टं जनैर्निरीक्षितुं न शक्यते । तथा प्रकाशबाह्यत्वे मृतप्रायाणां प्रमाणप्रमेयाद्याभासानां विमर्शज्वालाभिर्दह्यमानानामवशेषितशुद्धप्रकाशसमरसीभावः ।

तदुक्तं 'सिद्धपादैः'—

'ज्ञानज्ञातृज्ञेयात्मकमखिलमिदं सद्विमर्शशिखा ।
[illegible] प्रकाशरूपं शुभ्रं भस्मावशेषयति' ।।

इत्युक्तया पारमार्थ्येन भस्मावद्धूलनं ज्ञेयम् । तथा करणेश्वरीद्वारा भिक्षार्थं रूपाद्याभासांशानन्दकणसमर्जनायाटनं बाह्यभूमिषु प्रसरणम् । वस्तुतस्तु संविद्देव्य एव शब्दादौ विषये निपत्य तन्मधून्यादाय हृदयस्थाय चक्रेश्वरचिद्भैरवाय समर्पयन्त्यस्तदभेदेन प्रस्फुरन्तीति तस्मिंस्तद्व्यवहारोपचारः । तदुक्तम्—

'एतदानुसरं चक्रं हृदयाच्चक्षुरादिभिः ।
व्योमभिर्निःसरत्येव तत्तद्विषयगोचरे ॥' इति ।

तथा—

'हठपाकेन भावानां रूपे भिन्ने विलापिते ।
अश्नन्त्यमृतसाद्भूतं विश्वं संविित्तिदेवताः ॥
तास्तृप्ताःस्वात्मनः पूर्णं हृदयैकान्तशायिनम ।
चिद्व्योमभैरवंदेवमभेदेनाधिशेरते ॥'

इति । तथा नटनं स्वमरीचिवर्यैः सह विश्वनिर्माणादिक्रीडा, 'अथच नर्तक आत्मा' । 'रङ्गोऽन्तरात्मा' शि०सू० (३।९-१०) । इति सूत्रोक्तनीत्या जगन्नाट्यलीलाविर्भावनायां हेतौ परीतभूमौ तत्तद्भूमिकाग्रहणस्थानपुर्यष्टकवपुषि स्वकरणचक्रपरिस्पन्दनक्रमेण तत्तज्जागराद्यनानाभूमिकोन्मीलनात्मकं नटनम्— तदुक्तम्—

त्वमेकांशेनान्तरात्मा नर्तकः कोषरक्षता ।

इति । 'श्रीस्वच्छन्देपि'

'पुर्यष्टकसमावेशाद्विचरन् सर्वयोनिषु ।
अन्तरात्मा स विज्ञेयः ।'

इति । तथाशङ्कातङ्कारो विकल्पनिचय (यो) एव वेतालसंहतिः सैव वा अप्रबुद्धानामवरणत्वात् परिग्रहो यस्य, प्रबुद्धानां तु स एव भेददलनात् स्वशक्तिविकासकारी स्वात्मपरिज्ञापकः,—इत्येवं सर्वं शम्भोः स्वातन्त्र्यशक्तिसाहचर्यमहिम्नैव घटत इत्यर्थः ॥ ९ ॥

इदानीं परस्याःशक्तेरतिदुर्घटकारित्वसमर्थनतया विश्वाप्यायनलक्षण-

माह —

कल्पोपसंहरणकेलिषु पण्डितानि
चण्डानि खण्डपरशोरपि ताण्डवानि ।
आलोकनेन तव कोमलितानि मात—
र्लास्यात्मना परिणमन्ति जगद्विभूत्यै ॥ १० ॥

कल्पेषु ब्रह्मदिनावसानेषु प्रलयकालेषु प्रकृत्यादिपृथिव्यन्ततत्त्वानां, यद्वा महासंहारेषु शक्तितत्त्वान्तं पञ्चत्रिंशत्तत्त्वानां शक्तिमायाप्रकृतिपृथिव्यात्मकाण्डचतुष्टयात्मकानां देहप्राणबुद्धिशून्याभिमानिनां प्रमातृवर्गाणां वा सृष्टपूर्वाणामुपसंहरणकेलिषु संहाररूपक्रीडासु पण्डितानि चतुराणि, खण्डयति विदारयतीति खण्डः परशुः कुठारो यस्य तस्य परशुप्रहरणकस्य शिवस्य, चण्डान्यपि संहारकरणेन भयोद्वेगकारित्वाद्रौद्ररस्यापादकान्यपि करचरणाद्यवस्कन्दनात्मकानि ताण्डवानि नटनानि हे मातर्जननि ! तत्कालोचितार्तत्राणकरणानुगुण्येन मातरिति सम्बोधनम् ।

तदुक्तम्—

'पित्रा निर्भत्सितो बालो मात्रैवाश्वास्यते किल' । इति न्यायात्, अनेनैवाशयेनान्यत्रापि "शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन" इति पुंसामेव नृत्ते प्रायशस्ताण्डवशब्दस्य प्रयोगदर्शनात् यथा शिवताण्डवस्तोत्रमित्यादि । तवालोकनेन शृङ्गाररसभरितदृक्पातेन कोमलितानि तीक्ष्णतातिरोधानात्सञ्जातसौकुमार्याणि सन्ति लास्यं विलासिनीरचितसरागकलगीतियुक्तशृङ्गाररसप्रधानं नाट्यं तदात्मना जगतां चराचरात्मकानां विभूत्यै स्थित्याद्यैश्वर्याय परिणमन्ति दुग्धादेरिव दध्यादिवद्रूपान्तरापत्त्याविर्भवन्तीत्यर्थः । अतो नियतस्वाधिकारायोद्यतस्यापि शिवस्य स्वकृत्यं प्रति त्वद्दृक्पातमात्रेणान्यथाभवनात्त्वत्पारवश्य (त्व) मेवेतिभावः । संहरणोपयोग्योपकरणसूचनात् खण्डपरशोरिति साकूतं पदम् । अहो शिवस्य त्वत्साहचर्यमहिमा श्लाघ्यतमो येन कर्कशान्यपि तच्चेष्ठितानि कोमलायन्त इतिभावः ।

अथ च स्वात्मविश्रान्तिमये प्रलये देहप्राणबुद्धिशून्यात्मनां प्रमात्रवस्थानां संक्षयकेलिषु दक्षाणि, भेदप्रथारूपद्वैतविदारणशीलस्य तीव्रशक्तिपातवतः पुंसः देहाद्यभिमानावधूननचेष्टितानि परस्फुरत्तात्ममहावीर्यावष्टम्भाच्चिद्रससारत्वेन परामृश्यमानानि षड्विधानन्दभूमिकोत्तीर्णजगदानन्दचमत्कारस्फुरणाय विजृम्भन्तीत्यान्तरोऽर्थः सहृदयैःपरिशीलनीय इति ।

अथ च कल्पापसहृण नाम हठपाककमेणालंग्रासयुक्त्या युगपद् द्वादश संविन्म-चीनां श्रीकालसङ्कर्षिणीधाम्नि प्रवेशलक्षणं तद्रूपासु केलिषु संहरण-लीलासु पण्डितानि सञ्जातचातुर्याणि खण्डपरशोः संहारहृदयात्मज्ञानपरशु-बहिर्भावविदलनात् परभैरवस्य ताण्डवानि वेद्यवेदनात्मकस्वाङ्गभागविक्षेपणप्रा-नाट्यानि चण्डान्यपि बाह्याभासनिचयविलापनप्रावण्येन वैरस्यात्तीक्ष्णान्यपि हे मातस्तवालोकनेन शाक्तानन्दोच्छलत्सान्द्रचिद्रसापूरनिर्भरदृक्पातेन सरसीकृतत्वा-त्कोमलितान्याह्लादातिशयदायितया तीक्ष्णानि सन्ति लास्यात्मना सुन्दरीजनानि नयद्दृश्यनाट्यरूपेण जगतां प्रत्यभिज्ञातस्वैश्वर्याणां प्रेक्षकवृद्धप्रमातृणां विभूत्यै स्वाभिन्नत्वेन स्वसंवेद्यालौकिकनिरुपमरसास्वादप्रतिपत्यै परिणमन्ति विवर्तन्ते आविर्भवन्तीत्यर्थः ।

तदुक्तं 'क्रमनये'—

'क्रमत्रयत्वाष्ट्रमरीचिचक्रसञ्चारचातुर्यतुरीयसत्ताम्' ।
वन्दे महाभैरवघोरचण्डकालीं कलाकाशशशाङ्ककान्तिम् ॥ इति ॥ १० ॥

एवमतितीव्रशक्तिपातेनातिदुर्घटकार्यान्तरं निरूपयन् वेधदीक्षायाः परं दौर्लभ्यं द्योतयति—

जन्तोरपश्चिमतनोः सति कर्मसाम्ये
निःशेषपाशपटलच्छिदुरा निमेषात् ।
कल्याणि ! देशिककटाक्षसमाश्रयेण
कारुण्यतो *भवसि शाम्भववेधदीक्षा ॥ ११ ॥

जन्तोर्यस्य कस्यापिसंसारे भूयोभूयो जननमरणादिक्लेशभाजः, एतेनैहिकामुष्मिक-विषयोपभोगविरागवत्त्वमभिहितं भवति । विरक्तस्येत्यर्थः । अविद्यमाना पश्चिमाऽन्तिमा तनुः शरीरं यस्य स अपश्चिमतनुस्तस्य चरमजन्मिनः । पश्चिम-जन्माभावे हेतुतया विशिनष्टि सतीति, अपरिमितकालं भोगपरिपाट्या परिक्षी-णेषु शुभाशुभमिश्रकर्मनिचयेषु कदाचित्तुल्यबलविरुद्धे कर्मणी परिपक्वेऽपि विरो-

---

* भवति इत्यपि पाठः

धात् प्रातिस्विकप्रतिनियतफलभोगं दातुमुदासते । तदनन्तरभाविनां कर्मणामपरिपक्वतया भोगदानोन्मुखीभावाक्षमत्वादेतदेव कर्मणां साम्यमुच्यते । तदुक्तं 'तन्त्रालोके'—

'भोगपर्यायमाहात्म्यात् काले क्वापि फलं प्रति ।
विरोधात् कर्मणी रुद्धे तिष्ठतः साम्यमीदृशम्' ।।

इति । तदपेक्ष्यैवेश्वरः प्राणिकर्मसापेक्षो मलशक्तिं रुन्द्धे, तदीश्वरेच्छयैव सद्गुरुकृपापात्रतां भजमानो जन्तुः शाम्भव्या दीक्षया मुच्यते तदुक्तम् —

कर्मसाम्यमपेक्ष्याथ तस्येच्छा संप्रवर्तते । इति 'मालिनीविजयेऽपि'—

'रुद्रशक्तिसमाविष्टः स यियासुः शिवेच्छया ।
भुक्तिमुक्तिप्रसिद्ध्यर्थं नीयते सद्गुरुं प्रति ।। (४४।६)
*समासाद्य ततस्तुष्टाद् दीक्षामासाद्य शाङ्करीम् ।
तत्क्षणाद्वोपभोगाद्वा देहपाते शिवं व्रजेत् ।।' (४५।६)

इत्याशयेनैतत् समुच्चित्याह-कर्मसाम्ये सति मलकर्ममायारोधोपलक्षके विद्यमाने । [illegible] सतीत्यामन्त्रणापदम् हे सति ! संसारमुक्तिहेतुभूतब्रह्मविद्यास्वरूपे ! उमा-[illegible]ने ! "स तस्मिन्नेवाकाशे स्त्रियमाजगाम बहुशोभमानामुमां हैमवतीं तां होवाच किमेतद्यक्षमिति ब्रह्मेति होवाच" इति श्रुतेः । (केनो० ३।१२)

अथवा भक्तजनोपकर्तव्यज्ञत्वाद्विदुषि ! निमेषः कालविशेषस्तमपेक्ष्येति ल्यब्लोपे पञ्चमी । उक्तस्वरूपकर्मसाम्यात्मकालमवलम्ब्य यत्कारुण्यं शक्तिपाताख्योऽनुग्रहो यद्वा कारुण्यं परदुःखप्रहाणेच्छा तद्वशादेव देशिकस्य कुलाचार्यस्य सद्गुरोः कटाक्षसमाश्रयेण शक्तिपाताविनाभूतेन कृपापाङ्गदृगाधारेण सद्गुरुमूर्तिमाश्रित्य तद्द्वारेत्यर्थः । हे कल्याणि ? कल्यं नीरोगत्वमानयतीति कल्याणीति प्रकृतवाच्यानुरूप्येण सम्बुद्धिः । कल्ये प्रातःकाले गुरूक्तरीत्यानीयते ध्यानादिना विभाव्यते इति वा । 'देवीपुराणे' च 'कल्याणी मलयाचले' इत्युक्तमूर्तिरूपे वा त्वं शाम्भववेधदीक्षा भवसि । आचार्यानुग्रहमात्रप्राप्या शाम्भवी दीक्षा । तदुक्तम्

---

*'समाराध्य' मु० पु० पाठः ।

'अभिसन्धिं विनाचार्यशिष्ययोरुभयोरपि ।
देशिकानुग्रहेणैव शिवता व्यक्तिदायिनी' ॥

'सेयं हि शाम्भवी दीक्षा शिवावेशनकारिणी' ।

इति, ययोपायभूतया दीक्ष्यमाणो जन्तुः सद्यःस्वच्छस्वच्छन्दचिद्घनशिवैकतां यातीति भावः । तदुक्तं 'क्षेमराजेन'—

'जलमिव जले विनिहितं पयसि पयो यद्वदर्पितम् ।
सद्वत् यात्यैकत्वं दीक्ष्या दीक्षाक्रमेण दीक्षिता इति हि ॥

इति । वेधो नाम सर्वावयवावच्छेदेन रञ्जनम् । कीदृशी निःशेषाणां समूलानां पाशपटलानाम् ।

'घृणाशङ्काभयंलज्जा जुगुप्साचेति पञ्चमी ।
कुलं शीलं च जातिश्चेत्यष्टौ पाशाः प्रकीर्तिताः' ॥

इति श्रीकुलार्णवोक्तानां घृणादीनां छिदुरा विदारणशीला । अथ च पाशाश्चतुर्विधा मलं रोधशक्तिः कर्म मायाकार्यमिति ।

तदुक्तम्—

'प्रावृतीशो बलं कर्म मायाकार्यं चतुर्विधम् ।
पाशजालं समासेन धर्मा नाम्नैव कीर्तिताः' ॥ मृगे० तं।२-१७

इत्यस्यार्थः—प्रावृणोति प्रकर्षेणाच्छादयत्यणोः स्वाभाविक्यौ दृक्क्रिये इति प्रावृतिर्मलः सचेष्टे स्वातन्त्र्येणेति ईशः, बलं रोधशक्तिः, कर्म शुभाशुभात्मकं बीजाङ्कुरवत्प्रवाहरूपेणानादि, मायाकार्यं कलादित्रिंशत्तत्त्वात्मकम् । मायापदनिरुक्तिस्तु—मात्यस्यां शक्तयात्मना संसारेऽखिलं विश्वं सृष्टौ व्यक्तिमायातीति माया ।

तदुक्तम्—

इति । यद्वा पाशाः सांख्यशास्त्रोक्ताः—अविद्याऽस्मितारागोद्वेषोऽभिनिवेशश्चेति पञ्चविधाःक्लेशरूपाः । तत्रात्मानात्मविवकाभावोऽविद्या, अनात्मनि देहादावात्मतत्त्वविपर्ययोऽस्मिता, तत एव स्रक्चन्दनादौ देहोपभोगोपकरणेऽभिलाषो रागः, तत्प्राप्तिप्रतिकूले क्रोधो द्वेषः । इदमखिलं वस्तु ज्ञात्वापि तत्रासक्तिरभिनिवेशः, इत्येतेषां कर्तनशीला ।

'श्रीमत्खेटपालाचार्यैः'—मलपरिपाकहेतुक एव शक्तिपातोऽभ्युपगतः स्वतन्त्रशक्तिपातस्य दूषितत्वादिति, तन्मतानुसारिणो ग्रन्थकृतोऽयमाशयः— यत् सति कर्मसाम्ये कर्मणो मलस्य च विचित्रंप रिपाकमपेक्ष्य परमेश्वरो निग्रहानुग्रहौ करोति । न त्वेवमाप्रेक्षापूर्वकारित्वप्रसङ्गात् इति तं कालमपेक्ष्यैव शक्तिपातोऽनुग्रहलक्षणो भवति तदवलम्बादेव शाम्भवीदीक्षापात्रतां भजते पुमानिति कारुण्यत इतिपदेनाऽभिहितम् । वेधदीक्षालक्षणन्तु 'श्रीविद्यार्णवे'—

'अथ वेधात्मिका दीक्षा प्रोच्यते भवमोचिनी ।
चतुर्दले स्मरेत् पद्मे मूलाधारे शिशोस्तनौ ॥
धामत्रितयसंयुक्ते त्रिकोणोक्तबिले सुधीः ।
त्रिरावर्तमयीं देवीं विद्युत्पुञ्जस्वरूपिणीम् ॥
अणोरणीयसीं देवीं चक्रषट्कप्रभेदिनीम् ।
सुषुम्णावर्त्मना दिव्यां यान्तीं शिवगृहं प्रति ॥
सान्तान् वादीन् दलस्थार्णान् पद्मयोनौ समाहरेत् ।
षड्दले कमले तं तु लान्तबाद्यर्णयुग्दले ॥
स्वाधिष्ठाने गुरुः सम्यग्योजयित्वा तु वेधयेत् ।
तानर्णानानयेद्विष्णौ विष्णुं तं नाभिपङ्कजे ॥
फान्तढाद्यर्णसंयुक्ते दिग्दले वेधयेत् स्वयम् ।
वर्णांस्तान् योजयेद्रुद्रे रुद्रं तं हृत्सरोरुहे ।
ठान्तकाद्यर्णपत्राब्जे वेधयेदीश्वरे स्वयम् ।
वर्णांस्तानाहरेदस्मिन् कण्ठपद्मे च तं तथा ॥
कलामयदले पद्मे स्वरान् संयोज्य यत्नतः ।
सदाशिवे च संयोज्य तांस्तद्भ्रूमध्यपद्मके ॥
द्विदले हक्षसंयुक्ते वेधयित्वा तु देशिकः ।
हक्षौ तावाहरेद्बिन्दौ कलायामाहरेच्च तम् ॥
कलां नादे समायोज्य नादं नादान्तके पुनः ।

नादान्तमुन्मनीमध्ये विषुवक्त्रे तथोन्मनीम् ॥
विषुवक्त्रं स्वके वक्त्रे संहरेद् देशिकः स्वयम् ।
शक्त्या सहैवमात्मानं नयेत् परशिवावधिः ॥
देशिकाज्ञावशाच्छिष्यो दग्धाज्ञानस्तदा क्षितौ ।
पतेदवाप्तविज्ञानः सर्वज्ञो जायते ततः ॥
'सदाशिवः स्वयं भूयात् सत्यमेतन्न संशयः ।
ज्ञानप्रदा मया प्रोक्ता दीक्षा वेधात्मिका शुभा ॥ इति ।

'तन्त्रराजे' तु वेधदीक्षाशाम्भवशाक्तयामलभेदात् त्रिधा शाम्भवी यथा तत्रैव-

'शाम्भवं तु शृणु प्राज्ञे! वेधमद्भुतविग्रहम् । (२०।४६)
तूष्णीं संस्थापितं शिष्यं तत्तच्चक्रे तदात्मना ॥
स्वयं प्रविश्य तद्देहमेकीभूत्वा पुनः स्वके ।
समागत्यात्मरूपेण तदात्मानं विभाव्य वै ॥
कृतन्यासजपार्चस्तु तत्तनुं वह्निना दहेत् ।
स्यादेष शाम्भवो वेधः"

इति । एतदुक्तं भवति तत्तच्चक्रादिषु सद्गुरुःप्रागुक्तशाक्तवेधभावनाविरहितं तूष्णीं शिष्यं स्थापयित्वा तदात्मरूपेण तद्देहं सर्वात्मभावनया प्रविश्य तदात्मादिभिरेकीभूत्वा पुनः स्वशरीरमागत्य स्वात्मनि शिष्यात्मानं निःशेषं विलीनं विभाव्य कृतन्यासादिकः शिष्यशरीरं मृतं श्मशानं नीत्वाऽग्निसात्कुर्यादित्यर्थः इति मनोरमाटीकाकारः ।

अयं शाम्भवो वेधः केवलमोक्षेच्छोरेवेति सम्प्रदायः । कलौ प्रायशोऽस्या वेधदीक्षायाः कर्ता सद्गुरुस्तत्पात्रं शिष्यश्च दुर्लभतम इत्याहुराचार्यपादा इति ॥ ११ ॥

इदानीं भुवनक्षोभणध्यानोपायमाह—

मुक्ताविभूषणवती नवविद्रुमाभा
यच्चेतसि स्फुरसि तारकितेव सन्ध्या ।
एकः स एव भुवनत्रयसुन्दरीणां
कन्दर्पतां व्रजति पञ्चशरीं विनापि ॥ १२ ॥

हे कल्याणीति पूर्वस्मादनुवर्तनीयं, यस्य चेतसि हृदि नवविद्रुमस्याभिनवप्रवाल-रत्नस्येवाभा कान्तिर्यस्याः सा नवविद्रुमाभा आरक्तवर्णा, मुक्तामयानि विभूषणानि सन्त्यस्या इति मुक्ताविभूषणवती मुक्ताकणरचितमुकुट-मुक्ताकुण्डलहार-ग्रैवेयाङ्गदमुक्ताकङ्कणमणिबन्धाङ्गुलीयक-मुक्तामेखला - मुक्तापादकटक - मुक्ता-मञ्जीराद्यलङ्कारमण्डिता, अत एव तारकिता सञ्जाततारका सन्ध्येव स्फुरसि विलससि । सन्ध्याया रक्तवर्णत्वाद् देहकान्तिसादृश्यं तत्रापि तारकाणां शुक्लवर्ण-त्वान्मौक्तिकोपमत्वं ज्ञेयम् । स एवोक्तत्वद्ध्यानपवित्रमनस्क एको मुख्यो भुवन-त्रयात्मके श्रीयन्त्रे स्थिता याः सुन्दर्यो नवचक्रेश्वर्यस्तदावरणदेव्यो वा महात्रिपुर-सुन्दरीरश्मिरूपास्तासां, विनापि पञ्चशरीं संमोहनादिबाणानृते कन्दर्पतां कामे-श्वरतां व्रजति याति । तासां धैर्यगाम्भीर्यशालिहृदब्धेर्युगपत् संक्षोभादिकार्यकरणा-दित्यकरणकक्रियोत्पादात् कलाश्लाघ्यत्वं तस्य द्योत्यते । कामेश्वरस्य तु शरसा-हाय्येनैव तत्कार्यकौशलमिति व्यतिरेकः । यद्वा कन्दर्पतां पञ्चशरतां व्रजतीति पञ्चशराभावे पञ्चशरत्वगमनमित्याश्चर्यं विरोधद्योतकं च ।

सुन्दरीत्यनेन तासां त्रिभुवनक्षोभकारित्वं स्वतःस्वाभाविकमिति सूच्यते, तेन मोहिनीरपि मोहयन् क्षोभिणीरपि क्षोभयन् स्यादित्यहो त्वद् ध्यानमाहा-त्म्यातिशयः। एवं "शैवीमुखमिहोच्यते" (वि० भै० २०) इति नीत्या शक्तिद्वारैव शिवप्राप्तिरित्युक्तम्भवति ।

तदुक्तं 'विज्ञानभैरवे'—

'यथालोकेन दीपस्य किरणैर्भास्करस्य वा ।
ज्ञायते दिग्विभागादि तद्वच्छक्तया शिवः प्रिये ! ।। (२१) इति ।। १२ ।।

श्रीपुरप्रवेशे प्रथमकक्षायां महाकालपालितायामुल्लङ्घितायां सत्यामान्तरीयाः सुगमाः स्युरित्याशयेनाद्यकक्षातिक्रमोपायं निरूपयति—

ये भावयन्त्यमृतवाहिभिरंशुजालै—
    राप्यायमानभुवनाममृतेश्वरीं त्वाम् ।
ते लङ्घयन्ति ननु मातरलङ्घनीयां
    ब्रह्मादिभिः सुरवरैरपि कालकक्ष्याम् ।। १३ ।।

हे मातरिति प्राग्वद्बोध्यम् । अंशुजालैः षोडशकलाभिरमृताद्यभिख्याभिरह्लादकारित्वादमृतवाहिभिः शाक्तवीर्यस्फारवद्भिरतो भुवनान्याप्याययन्ती आप्यायनं शुष्कस्य सरसीभावः, एवंविधां सप्तदशीमनस्तमितामभाख्यामृतकलारूपाममृतेशीं ये त्वां भावयन्ति । तदुक्तं 'स्वच्छन्दसंग्रहे'—

'अमृतेशीं च तन्मध्ये भावयेच्चनवात्मना'

इति ।

'प्रसृतानृतरश्म्योघसन्तर्पितचराचराम् ।
भवानि! भवशान्त्यै त्वां भावयाम्यमृतेश्वरीम्' ॥

इत्युक्तचामृतस्राविणीं विचिन्तयन्ति । रुद्रशक्तिसमावेशलक्षणस्यामृतत्वस्यप्रदानादमृतेश्वरसंज्ञा चागमेषु स्मर्यते, तदुक्तं "श्रीनेत्रतन्त्रे" "अमृतत्वं ददात्येवममृतेश इति स्मृतः" इति । अमृतादिकला अग्रे वक्ष्यन्ते । ते ब्रह्मादिभिः सुरवरैरनाश्रितसदाशिवेश्वरानन्तरुद्रप्रभृतिभिरलङ्घनीयां दुरतिक्रमणीयां कालकक्ष्यां लङ्घयन्त्यतिक्राम्यन्ति । श्रीपुरस्य वहिः प्रथमप्राकारान्तरे नानावृक्षमहोद्याने काल्या सह कालो निवसति पालकः, सा हि कक्ष्या दुर्लङ्घ्याऽतस्त्वदात्मकामृतेश्वरी निरन्तरभावनासमासादितप्रसादानां कालेनाविघ्नितत्वात्तदुल्लङ्घनं सुकरमित्यर्थः ।

तदुक्तं 'ललितोपाख्याने'—

'लोहादिसप्तशालानां रक्षका एव सप्त वै'
'नानावृक्षमहोद्याने वर्तते कुम्भसम्भव! ।
महाकालःसर्वलोकभक्षकः श्यामविग्रहः ॥'
श्यामकुञ्चुकधारी च मदारुणविलोचनः ।
ब्रह्माण्डचषके पूर्णं पिबन् विश्वरसायनम् ॥
महाकालीं घनश्यामामनङ्गार्द्रामपाङ्गयन् ।
सिंहासने समासीनः कल्पान्ते कलनात्मके ॥
ललिताध्यानसम्पन्नो ललितापूजनोत्सुकः ।
वितन्वंल्ललिताभक्तैः स्वायुषो दीर्घदीर्घताम् ॥
कालमृत्युप्रमुख्यैश्च किङ्करैरपि सेवितः ।
महाकालीमहाकालौ ललिताज्ञाप्रवर्तकौ ॥
विश्वं कलयतः कृत्स्नं प्रथमेऽध्वनि वासिनौ ।

इति, अथ च ये त्वदुपासका अमृतवाहिभिःसहस्रारीयसोममण्डलात् स्वाधिष्ठानाग्निज्वलननैव विद्रुतसुधाधारावर्षिभिरंशुजालैरग्निसूर्यचन्द्रकलानिवहैः प्रत्यावृत्तिसमये आप्यायमानं सन्तर्प्यमाणं सरसीक्रियमाणं भुवनं द्वासप्ततिसहस्रनाडीमार्गलक्षणं, यद्वा भुवनं सुषुम्णामार्गस्थकुलकमलाश्रितदेवताचक्रं यया तामत एवाप्याय(न)करणादन्वर्थाभिधाममृतेश्वरीं नाम देवतां त्वाममृतकुण्डलिनीरूपां भावयन्ति गुरूक्तयुक्तया चिन्तयन्ति । तथा च 'श्रुतिः'—

"लोकस्यद्वारमर्चिमत्* पवित्रं ज्योतिष्मद् भ्राजमानं महस्वत् ।
अमृतस्य धारा बहुधा दोहमानं चरणं नो लोके सुधितान्दधातु ॥
(सुदर्श० ५) इति ।

लोकस्य ब्रह्मलोकस्य द्वारं साधनं चरणशब्दश्चरति यातायातं करोतीतिव्युत्पत्त्या कुण्डलिनीपरः । तदुक्तं 'शुक्रसंहितायाम्'—

'पावकस्यार्चिषा भानोर्ज्योतिषा महसा विधोः ।
दोहमाना सुधाधारा द्विसप्ततिसहस्रधा ॥
गुप्ताचारा कुण्डलिनी तृप्तानस्मांस्तनोतु सा । इति ।

ते सुरवरैरनाश्रितान्तैरमरोत्तमैर्ब्रह्मादिभिर्लङ्घितुमशक्यां कालकक्ष्यां जरामरणादिलक्षणां लङ्घयन्ति नन्वतिवर्तन्त्येव । अजरामरतामाप्नुवन्तीत्यर्थः । तदुक्तं 'रुद्रयामले'—

'तत्रोत्थितामृतरसं द्रुतलाक्षारसोपमम् ।
पाययित्वा परां शक्तिं कृष्णाख्यां योगसिद्धिदाम् ॥
षट्चक्रभेदकन्तत्र सन्तर्प्यामृतधारया ।
आनयेत्तेन मार्गेण मूलाधारं ततः सुधीः ॥
एवमभ्यसमानस्य अहन्यहनि मारुतम् ।
जरामरणदुःखाद्यैर्मुच्यते भवबन्धनात् ॥

इति । ब्रह्मणोऽपि स्वायुषःक्षये कालबाधाभिभवात् । एवं विष्ण्वादेरपि । प्रोक्तविधोपासकस्य तु कालकक्ष्योल्लङ्घनात् स्वच्छन्दचारित्वं । मार्कण्डेयमुन्यादेरपि अमृतेश्वर्युपासनयैव कालबाधातिक्रमश्रवणाच्च, नन्ववधारणे आमन्त्रणे वा । अथ च यदा परमपदात् समनापदावरोहणेन तदारूढं महाप्रकाशात्मबिन्दुधाम-

* मर्चिष्मत् इति पा०भे०

सृष्टिप्रसरोन्मुखं विदधासि तदा मध्यमार्गेण अधोऽधः कारणचक्राधारादिसर्वं निषिञ्चन्तीं ये त्वत्स्वरूपोत्थिताभिर्ज्ञानक्रियासारखेचर्यादिशक्तिमालाभिः क्षरत् सुधारसधाराभिर्भूर्भुवःस्वर्लक्षणानि षट्त्रिंशत्तत्त्वरूपाणि कालाग्न्याद्यनाश्रितान्तानि भुवनान्याप्याययमानाममृतेश्वरीं त्वां चिदानन्दस्वरूपां सकलनिष्कलमिश्रात्मकमभावनया भावयन्तस्ते परार्धगुणितमहाकालकक्ष्यातिवर्तनादकालकलितानुत्तरोन्मनापरतत्त्वैकात्मपरमशिवैकात्म्यं भजन्ते इति सूक्ष्मध्याने संवित्क्रमार्थः भैरवागमेषु प्रसिद्धः । तदुक्तं—

'अमृतेशपदं सूक्ष्मं संप्राप्यैवामृतीभवेत् ।
तदासावमृतीभूय मृत्युजिन्नात्र संशयः ॥
कालजित् सुभगो धीरो मृत्युस्तञ्च न बाधते ।

इति । भावनात्रयलक्षणं 'योगिनीहृदये'—

'आज्ञान्तं सकलं प्रोक्तं ततः सकलनिष्कलम् ।
उन्मन्यन्ते[1], परे स्थाने निष्कलञ्च त्रिधा स्थितम् ॥ इति ।
(१ पट० २७, २८)

"आनन्दो ब्रह्मेति व्यजानात्" (तैत्ति० ३।६) इति । "आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन"[2] (तैत्ति० २।४) इति श्रुतेश्च भयातिक्रमणोपबृंहणात् । अथ च ये इज्यातपोदानादिकर्मकारिणोऽमृतेश्वरीपर्यायकुण्डलिन्युत्थापनपूर्वममृतरसमास्वाद्य तेन डाकिन्यादियोगिनीचक्रभुवनमाप्याययन्ति, एतादृश आन्तरे कर्मणि सति तेषां तानि कर्माण्यारभ्यमाणानि सफलानि सम्पद्यन्ते । अन्यथा तथा कर्मकारिणां क्रियाकाल एव क्रियमाणानां कर्मणां संहारकरणान्मृत्युरूपो भवति तत्कर्मणां विफलीकरणादिति त एव त्वदुपासकाः कालोल्लङ्घनाद्यज्ञादिकर्मसाफल्यभाजो ध्रुवं भवन्ति । तदुक्तं "चन्द्रज्ञाने"

'अन्तरग्नौ मधुस्रावं कुर्वतां शिशिरात्मनाम् ।
इष्टापूर्तादिकर्माणि फलन्ति किल कालतः ॥
अन्तःस्रावविहीनानां सदा सन्तप्तचेतसाम् ।
कर्माणि क्रियमाणानि कालो ग्रसति तत्क्षणात् ॥

---

1 उन्मन्यन्तं । 2 कदाचन इति पा० भे०

कालकर्षिणिकैवान्तः करोति मधु वर्षति ।
इति यो वेद तस्य स्याद् ब्रह्मरन्ध्रात् सुधास्रुतिः ॥
वैदेही जनयामास सरघा कालकर्षिणी ।
अहोरात्रैरिमां विद्यां दशपञ्चभिरक्षरैः ॥

इति । अत्रान्त्यश्लोकयोरयमर्थः—कालकर्षिण्याख्या देवी मधुकरोतीति मधुकृद्रात्रिरूपा, मधुवर्षतीति मधुवृषा अहोरूपा च, इतिप्रकारेण रात्रिदिवसाभिन्नां देवीं यो वेदेत्यादि विगतोदेहो यस्य स विदेहोऽनङ्गः कामेशस्तत् सम्बन्धिनी वैदेही कामेश्वरी अहोरात्राभिन्नैः पञ्चदशभिर्वर्णैरिमां पञ्चदशीविद्यां जनयामास तथा च श्रुतिः—"जनको ह वैदेहोऽहोरात्रैः समाजगाम" इति । इयमेव च मधुकर्तृत्वात सरघा 'श्रुतिरपि'— "इयं वाव सरघा तस्या अग्निरेव सारघं मध्विति"

इत्थं विज्ञानवतां फलविशेषःश्रुतौ यथा—

"स यो ह वा एता मधुकृतश्च मधुवृषांश्च वेद कुर्वन्ति हास्यैता अग्नौ मधु नास्येष्टापूर्तं धयन्ति अथ यो न वेद न हास्यैता अग्नौ मधु कुर्वन्ति धयन्तीष्टापूर्तमिति"

"या एता पूर्वपक्षापरपक्षयोः रात्रयस्ता मधुकृतो यान्यहानि ते मधुवृषा इति च" श्रुत्यर्थस्तु-मधु कुर्वन्ति वर्षन्ति चेत्यवयवार्थशक्तेः मधुकृच्छब्दो रात्रिपरो मधुवृषशब्दश्च दिवसपरः । एता यो वेद तस्यैता दिवससहिता रात्रयोऽग्नौ बैन्दवस्थानाद् ब्रह्मरन्ध्रान्मधु कुर्वन्ति स्रावयन्ति अस्येष्टापूर्तं कर्मजातं न धयन्ति पीत्वा न लोपयन्ति व्यतिरेकेऽनिष्टमाह—अथ य इत्यादिना । अयं भावः कुण्डलिन्युत्थापनेन मधुस्रावणेन डाकिन्यादिमण्डलाप्लावनरूपान्तरकर्मणि सत्येव बाह्यानि यज्ञादिकर्माणि सफलानि भवन्ति । तदभावे तु यस्मिन् काले कर्माणि क्रियन्ते स काल एव तेषां कर्मणां कालो मृत्युरूपो भवतीति ॥ १३ ॥

इदानीं वाग्भवीयध्यानस्य प्रदर्शनपूर्वं फलं वर्णयति—

यः स्फाटिकाक्षगुणपुस्तककुण्डिकाढ्यां—
व्याख्यासमुद्यतकरां शरदिन्दुशुभ्राम् ।

पद्मासनां च हृदये भवतीमुपास्ते
मातः! स विश्वकवितार्किकचक्रवर्ती ॥ १४ ॥

स्फाटिकः स्फटिकमणिरचितोऽक्षगुणोऽक्षमालापुस्तकं त्रय्यात्मकं कुण्डिका कमण्डलुस्तदाढ्यां तद्धारिणीं, तथा व्याख्यामुद्रया समुद्यत उद्घूर्णः करो दक्षिणपाणिर्यस्यास्तां व्याख्यासमुद्यतकरां शरदिन्दुवच्छारदसुधांशुवच्छुभ्रां धवलां, तथा पद्मासनां पद्मे प्रकृतिमयपत्र-विकृतिमयकेसर-पञ्चाशद्वर्णवीजाढ्यसंविन्नालादिविशेषेणोपेतमासनं पीठं यस्याः स्वाधःस्थशक्तिकमलाक्रमणात् पद्मासनबन्ध इतिज्ञेयम् ।

अथ च कमलासनत्वात् पद्मासनां पद्मां लक्ष्मीं भक्तेभ्यो विभज्य सनति ददातीति वा वनषणसंभक्तौ । तदुक्तमभियुक्तैः—

'असौ भाग्यं धत्ते परमसुखभोगास्पदमयं
विचित्रं तद्गेहं भवति पृथुकार्तस्वरभृतम् ।
निविष्टः पल्यङ्के स कलयति कान्तारतरणं-
प्रसादं कोपं वा जननि! भवती यत्र कुरुते ॥

इति । यद्वा पद्मासनमस्या अस्तीति तल्लक्षणन्तु—

'वामोरूपरिदक्षिणञ्च चरणं संस्थाप्य वामं तथा--
दक्षोरूपरि पश्चिमेन विधिना धृत्वा कराभ्यां दृढम् ।
अङ्गुष्ठौ हृदये निधाय चिबुकं नासाग्रमालोकयेद-
एतद्व्याधिविनाशकारि यमिनां पद्मासनं प्रोच्यते ॥

इत्येतादृशीं वाग्भवकूटाधिदेवतां सरस्वतीरूपां भवतीं यो हृदये मनसि उपास्ते निषेवते, अथवा हृदयेऽनाहतसंज्ञके स्थाने पद्मासनामर्थादनाहतकमलकर्णिकामध्यारूढां यः सेवत इति हृदयपदसान्निध्येनायमप्यर्थो ज्ञेयः । हे मातः! स विश्वषु सर्वेषु कविषु प्रबन्धरचनाशक्तिकौशलशालिषु तार्किकेषु नैयायिकेषु तेषां वा चक्रवर्ती सम्राट् प्रथितः सम्पद्यत इत्याध्याहार्यः ।

तदुक्तं श्रीदुर्वाससा—

"चिन्तयतां सितवर्णां वाचो निर्यान्त्ययत्नतो वदनादिति"
वाग्भवसाधनप्रस्तावे च—

'सत्पण्डितघटाटोपजेताप्रतिहतप्रभः ।
सत्तर्कपदवाक्यार्थशब्दालङ्कारसारवित् ॥

इत्युपक्रम्य,

'सुकुमारतरस्फारवृत्तालङ्कारपूर्वकम् ।
पदगुम्फैर्महाकाव्यकर्ता देवेशि! जायते ॥ इत्यादि ।

महाकविर्महातार्किकश्चोक्तरूपध्यानोपासनया भवतीत्यर्थः ।
व्याख्यामुद्रालक्षणं यथा—

'दक्षिणाङ्गुष्ठतर्जन्यावग्रलग्ने पराङ्गुलीः ।
प्रसार्य संहत्तोत्ताना एषा व्याख्यानमुद्रिका ॥ इति १४ ॥

अधुना भक्तेष्वनुजिघृक्षापारवश्येनानुचितभूमिकाग्रहणमप्यभ्युपगम्यत इति निरूपयन् शाबरभूमिकां नमस्यति

वर्हावतंसयुतवर्बरकेशपाशां—
गुञ्जावलीकृतघनस्तनहारशोभाम् ।
श्यामां प्रवालवदनां सुकुमारहस्तां
त्वामेव नौमि शबरीं शबरस्य जायाम् ॥ १५ ॥

वर्हावतंसेन शिखिपिच्छपत्ररचितशेखरेण युतो बर्बरः कुञ्चितः कुटिलःकेशपाशः केशकलापो यस्याः, बर्बरा उद्धूषिता धूसरा इत्यन्ये । आभुग्नह्रस्वाग्रकेशा इति मनोरमाकारः । गुञ्जावलीभिः रक्तिकाश्रेणीभिः कृता घनस्तनयोर्निरन्तरा-पीनकुचयोर्हारशोभा मुक्तावलीकान्तिर्यस्यास्तां, आभीरजात्यौचित्यान्मुक्ताहार-स्थानीयत्वाद् गुञ्जावलीनामेव प्रियतारुच्यत्पादाच्च शोभातिशयाधायकत्वम् ।

वदनशब्देनात्र कपोलावयवावुपलक्ष्येते, तेनारक्तकपोलामित्यर्थः । अथ च प्रवालोऽभिनवपल्लवस्तद्वदभिनववदनकान्ति, तया सुकुमारौ कोमलावकर्कशस्पर्शौ हस्तौ पाणी यस्यास्तां, सुकुमार इक्षुभेदो वा तदुपलक्षितौ ऐक्षवकोदण्डधारी हस्तयोर्यस्या इति वा ।

तदुक्तं--

"हिमाद्रिसानावुद्याने नानाद्रुममनोहरे ।
रत्नमण्डपमध्यस्थवेदिकायां स्थितां स्मरेत् ॥

'गुञ्जाफलाकल्पितहाररम्यां
श्रुत्योः शिखण्डं शिखिनो वहन्तीम् ।
कोदण्डबाणौ दधतीं कराभ्यां
कटिस्थवल्कां शबरीं स्मरेयम् ॥

इति । एतादृशीं शबरस्य मध्यमपाण्डवप्रसादार्थं धृतशबरावतारस्य शिवस्य जायां शक्तिं सधर्मिणीं गृहीततद्भूमिकां त्वामेव त्वदभिन्नस्वरूपामहं नौमि वन्दे । स्वभावोक्तिरलङ्कारः । शबरावतारेऽपि शक्त्यनुगमनेन समस्तकर्तव्येषु शक्त्यनुग्रहं विना शिवस्य तत्तत्कार्यनिर्वाहानुपपत्तिरिति व्यज्यते । तदुक्तं—

'शिवोऽपि शवतां याति कुण्डलिन्या विवर्जितः ।
शक्तिहीनोऽपि यः कश्चिदसमर्थःस्मृतो बुधैः ॥ इति ।

अर्जुनमनुग्रहीतुं महादेवः कैरातं वपुः सहोमादेव्या बभार । तत्कथा महाभारते वनपर्वणि प्रसिद्धा । यथा—युधिष्ठिराज्ञयास्त्रलाभाय देवराजं प्रसादयितुमर्जुन इन्द्रकीलगिरिं प्रययौ । तत्रेन्द्रसंवादेन रिपुसंहरणक्षमं पाशुपतनामकं दिव्यास्त्रं प्राप्तुं महादेवं तपसाराधयामास । तत्तपसा सन्तप्तैर्महर्षिभिरज्ञाततदाशयैस्तपसस्तं निवर्तयितुं प्रार्थितो महादेवः कैरातवेशं धृत्वा तत्समाननेपथ्योमादेवी च कैरातवेशानेकदासीदासजनवेष्टिता तत्तपोवनमाजग्मतुः । तदानीमेव मूकदानवो वराहरूपेणार्जुनं संहर्तुं लक्ष्यं चकार । कपटवराहस्य दुराशयमालोच्य तापसो महादेवश्च तं प्रति शरान्निचिक्षिपतुः । मृते तस्मिन् वराहे मृगयाधर्मविवादेन

प्राप्य पार्थिवेश्वरप्रतिमां पुष्पमाल्यादिभिरर्चयन् पाण्डवस्तन्माल्यादिविभूषितं किरातं दृष्ट्वा, 'महादेवोऽयमेव मदभीष्टदेवतेति' ज्ञात्वा तत्पादयोर्निपपात, तदनु प्रसीदति शबराकृतौ शिवे दिव्यास्त्रं समन्त्रं प्रापदिति ।। १५ ।।

अथ यामलीभावसम्पत्तौ किमप्यानन्दरसचमत्कारोच्छलितत्वमित्यर्धेश्वरीभावोपलम्भोत्प्रेक्षया सूचयंस्स्नातौति—

अर्धेन किं नवलताललितेन मुग्धे !
क्रीतं विभोः परुषमर्धमिदं त्वयेति ।
आलीजनस्य परिहासवचांसि मन्ये
मन्दस्मितेन तव देवि ! जडीभवन्ति ।। १६ ।।

हे मुग्धे ! सुन्दराङ्गसन्निवेशे ! मुग्धः अशिक्षिततया शिथिलितमानिनीव्यापारत्वाच्चानभिज्ञे ! इति साभिप्रायामन्त्रणम् । "मुग्धः, सुन्दरमूढयोरिति विश्वः" नवलताऽभिनववल्ली तद्वल्ललितेन सुन्दरेण कोमलेनेत्यर्थः यद्वा ललितानि शृङ्गारभावजन्यविलासचेष्टा यस्य तेनार्धेन स्वार्धशरीरेण करणेन त्वया क्रेत्र्या विभोः पत्युरर्धाङ्गीभावाय परुषं कर्कशममृदुस्पर्शमिदं लक्ष्यमाणमपरमर्धंक्रय्यं किं क्रीतं विनिमय्य स्वीकृतम् । किमोऽत्राक्षेपार्थकत्वम् । इत्येवंभूतान्यालीजनस्य विजयादेः 'सखीजनस्य परिहासवचांसि सविलासनर्मोक्तयो हे देवि ! अहं मन्ये वितर्कये, तव मन्दस्मितेन मनाग्हास्येन जडीभवन्ति मन्दीभवन्ति । कान्ताङ्गस्पर्शसुखरसोत्कर्षज्ञापकेन त्वत्स्मितेनैव तासामपि तथाविधोपक्षिप्यमाणस्वसंवेद्यस्पर्शसुखानुभवनिमग्नमनस्कतया लज्जावहत्वेन परिहासोक्तिव्यापारस्य मन्दीभावात् स्मितमात्रेणैव प्रत्युक्तास्ता लज्जासिन्धौ निममज्जुरित्यर्थः स्मितलक्षणन्तु—

'ईषद्विकासितैर्बन्तैः कटाक्षैः सौष्ठवान्वितैः
अलक्षितद्विजद्वारमुत्तमानां स्मितं भवेत् ।।

लोकेऽपि कोमलवस्तुविनिमयेन कर्कशवस्तुग्रहणे मुग्धत्वपरिहासोक्त्युपालम्भप्रसिद्धिरिति ।। १६ ।।

इदानीं सकार्यामा मासा अनायासेन विलापनकारणं भगवतीध्यानमेवेति वर्णयति—

ब्रह्माण्डबुद्बुदकदम्बकसंकुलोऽयं
मायोदधिर्विविधदुःखतरङ्गमालः ।
आश्चर्यमम्ब ! झटिति प्रलयं प्रयाति
त्वद्ध्यानसन्ततिमहावडवामुखाग्नौ ॥ १७ ॥

ब्रह्माण्डपदेनात्र ब्रह्माधिष्ठितं पृथिव्यण्डं गृह्यते ननु शक्तयण्डं, तस्य बुद्बुदप्रावतावचनान्मायोदधिजन्यत्वानुपपत्तेः । मायापदेन स्वान्तःक्रोडीकृतप्रकृत्याद्यण्डयुग्ममेकत्रिंशत्तत्त्वसर्गाधारं मायाण्डमुच्यते । तया च मायोदधिर्मायाण्डरूपः सागरो यः शक्तयण्डसागरान्तरापेक्षया तद्बिन्दुरूपः ब्रह्माण्डैरसंख्यैः पृथिव्यण्डैस्तद्रूपैर्बुद्बुदकदम्बकैः वातपूर्णजलस्फोटव्यूहैः सङ्कुलः सङ्कीर्णः । वृत्तावत्र बहुवचनविग्रहादसंख्यातत्वं ब्रह्माण्डगतं स्वीकार्यम् । विविधानां बहुविधानामाध्यात्मिकादिदुःखरूपाणां तरङ्गाणां वीचीनां माला पङ्क्तयो यस्य सोऽयं हे अम्ब ! मातस्तवध्यानसन्ततिः सजातीयप्रत्ययप्रवाहात्मध्यानविस्तारस्तद्रूपे ! महति बृहति वडवामुखाग्नौ वाडवाग्नौ झटिति मङ्क्षु प्रलयं प्रयाति संक्षयमेतीत्याश्चर्यम् । लोके तावत् अविरतं वाडवाग्निना निपीयमाने सागरे तत्संक्षयो दुष्करः । त्वद्ध्यानाग्नेस्तु झटिति मायोदधेः प्रलीनीकरणादिति लोकादस्य व्यतिरेकित्वमित्याश्चर्यास्पदमिदम् ।

अथवा "मायोर्ध्वे तु महामाया" इत्युक्तेर्मायापदेन महामायोच्यते । या षट्त्रिंशं शिवतत्त्वमपि व्याप्यावस्थिता, अन्यथा तस्य शुद्धाध्वनि परापरात्मभेदप्रसरणोन्मुख्यं न स्यादित्येवमत्र ब्रह्मपदेन शक्तयण्डस्य स्वान्तर्गर्भीकृतमायाद्यण्डत्रयस्य ग्रहणादण्डचतुष्टयात्मकं विश्वमुक्तं स्यात् । तदुक्तमाचार्याभिनवपादैः—

'निजशक्तिवैभवभरादण्डचतुष्टयमिदं विभागेन ।
शक्तिर्माया प्रकृतिः पृथ्वी चेति प्रभावितं प्रभुणा ॥' (प०सा।४)

इति । यद्वा 'मायान्तु प्रकृतिं विद्या'दित्युक्तेर्मायाशब्देन प्रकृतिरुच्यते, तेन प्राकृतिकसर्गरूपोदधिर्यत्र, विकारषोडशकान्तर्वर्तिनां पञ्चीकृताकाशादिस्थूलभूतानां कार्याणि असंख्या ब्रह्माण्डनिवहा बुद्बुदायमानाः प्रतिक्षणमुदयलयभाजः । तेषु स्थितानां स्थूलसूक्ष्मलिङ्गदेहाभिमानिनां जीवात्मनां धर्माधर्महेतुकानि विविधानि सुखदुःखानि तरङ्गमालायमानानि तानविरतमान्दोलयन्ते । अत्र दुःखशब्दः सुखस्याप्युपलक्षकः ।

एतादृशदुःखादिमयस्य प्राकृतिकसृष्टिसागरस्य पारङ्गमनकारणं केवलं देवीपदध्यानमेवेति तात्पर्यम् । ब्रह्माण्डलक्षणं यथा—स्वयम्भूर्भगवानभिध्यानपूर्वं प्रजाः सिसृक्षुरादौ सृष्टास्वप्सु बीजावसर्जनेन हैमाण्डं समुत्पादितवान् । तत्र हिरण्यगर्भात्मना स्वयं बहुकालमुषित्वाण्डस्य द्विधाकरणाद् दिवं भूमिञ्च शकलाभ्यामन्तराकाशादि सर्वं वस्तुजातं निर्मितवानिति । तदुक्तं 'मनुना'—

'ततः स्वयम्भूर्भगवानव्यक्तो व्यञ्जयन्निदम् ।
महाभूतादिवृत्तौजाः प्रादुरासीत्तमोनुदः ॥ (१।६)

इत्यारभ्य,

[1]'सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः ।
अप एव ससर्जादौ तासु [2]बीजमवासृजत्[3] ॥ (१ अ० ८)

तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ।
तस्मिञ्जज्ञे स्वयंब्रह्मा सर्वलोकपितामहः ॥

'तस्मिन्नण्डे स भगवानुषित्वा परिवत्सरम् ।
स्वयमेवात्मनो ध्यानात्तदण्डमकरोद् द्विधा ॥ (१।१२)
ताभ्यां स शकलाभ्याञ्च दिवं भूमिञ्च निर्ममे ।
मध्ये व्योम दिशश्चाष्टावपां स्थानञ्च शाश्वतम् ॥' (१।१३)

इत्यादि । एवं कार्यार्थविभासिततत्तद्रूपोपासनायामपि भक्तानां त्वमेव प्रणनीया इत्याशयेनोपमयैकात्म्यं निरूपयति—

**दाक्षायणीति कुटिलेति गुहारणीति**
**कात्यायनीति कमलेति कलावतीति ।**
**एका सती भगवती परमार्थतोऽपि**
**सन्दृश्यसे बहुविधा ननु नर्तकीव ॥ १८ ॥**

---

1. 'भिध्यायन्' इत्यपि पाठः । 2. वीर्यं । 3. क्षिपत् । इति मु० पु० पाठ भेदाः ।

दक्षस्य प्रजापतेः कन्या दाक्षायणी लोहितादित्वात् ष्फ प्रत्ययः, अश्विन्यादितारकारूपा वा । यद्वा दर्शपूर्णमासयोरावृत्तिर्दाक्षायणयज्ञपदेनोच्यते तत्स्वरूपा । तथा कुटिलेति, अनच्ककलाकारा पराशक्तिः, इयमेव देशिककटाक्षपातेन प्रबोधमाप्ता सूर्यमण्डलभेदनपूर्वमिन्दुमण्डलं द्रावयन्ती तदुद्भूतामृतधारापानानन्दिता ऊर्ध्वप्रसरणात् परपुरुषसङ्गमुपैति । ततोऽकुलपदात् स्वारस्येन समुल्लसन्ती सृष्टिसंहारक्रमावलम्बनेन स्फुरति । तदुक्तं 'वामकेश्वरे'—

'यदोल्लसति शृङ्गाटपीठात् कुटिलरूपिणी ।
शिवार्कमण्डलं भित्त्वा द्रावयन्तीन्दुमण्डलम् ॥
[1]तदुद्भूतामृतस्यन्दिमदिरानन्दनन्दिता ।
कुलयोषित्कुलं त्यक्त्वा परं पुरुषमेति सा ॥
'निर्लक्षणं निर्गुणं च कुलरूपविवर्जितम् ।
ततःस्वच्छन्दरूपा तु [2]परिभ्रम्य जगत्पुनः ॥
तेन चारेण सन्तुष्टा पुनरेकाकिनी सती ।
रमते' इति ॥ (४ च० विश्रामः १२-१६)

गुहारणीति गुहायां हृद्गुहायां द्वादशान्ते वारणी योनिर्नित्योन्मिपदाद्यस्फुरत्तात्मा, अर्थात् हृदो द्वादशान्तं स्वारस्येन प्रवहतः प्राणस्य द्वादशान्तान्ताद्धृदन्तमपानस्याप्यन्तर्बहिर्भावकरणात्मा, अप्राणाद्यशाक्तस्पन्दोन्मेषरूपा परा देवीत्यर्थः तदुक्तं 'स्वच्छन्दे'—

प्राणः प्राणमयः प्राणो विसर्गापूरणं प्रति ।

इति । 'विज्ञानभैरवेऽपि'—

'ऊर्ध्वे प्राणो ह्यधो जीवो विसर्गात्मा परोच्चरेत् ।
उत्पत्तिद्वितयस्थाने भरणाद्भरिता स्थितिः ॥ (२४)

इत्यत्रार्थान्तराणि श्रीक्षेमराजपादैर्विवृतानि तानि, तत एव बोद्धव्यानि ।

'श्रुतिरपि'—

---

1 [illegible] 2 [illegible]

'ऊर्ध्वंप्राणमुन्नयत्यपानं प्रत्यगस्यति ।
मध्ये वामनमासीनं विश्वे देवा उपासते ।। (कठो० ५।३) इति ।

अथ च गुहासु रुद्रक्षेत्रज्ञादिनानाप्रमातॄणामन्तर्हृद्दिशात्मह्रत्खदासु स्थितत्वेनेच्छाज्ञानक्रियाणामुल्लासिकाऽरणीवारणी अग्नीषोममयी योनिरित्यर्थः। तत एवानाश्रितसदाशिवेश्वरानन्तरुद्रादयो देवा वामाज्येष्ठाद्या ब्राह्म्याद्याश्च शक्तयः समुन्मिषन्ति । तदुक्तं 'मृत्युञ्जयभट्टारके'—

'ततः प्रवर्तते शक्तिर्लक्ष्यहीना निरामया ।
इच्छा सा तु विनिर्दिष्टा ज्ञानरूपा क्रियात्मिका ।।

इत्युपक्रम्य—

'सा योनिः सर्वदेवानां शक्तीनां चाप्यनेकधा ।
अग्नीषोमात्मिका योनिस्तस्याः सर्वं प्रवर्तते ।। इति ।

अग्नीषोमेत्यनेन सृष्टिस्थितिसंहारकारित्वसम्भवः शक्तेः प्रदर्शितः । किञ्च, गुहायां कुलकुण्डे अरणीव सद्गुरूक्तयुक्तयाऽऽध्मायमानोदानवह्निसमुत्तेजनेन स्फुरत्तारकाकारपरतेजःप्रादुर्भावनोत्तरं परशाक्तधामसमापत्तिदायिनीत्यर्थः । यद्वा गुहायां बुद्धौ अरणीवारणिरन्तर्निहितशाक्तवीर्यात्मस्वप्रकाशा विश्वमाभासयन्ती । "परेण नाकं निहितं गुहायां विभ्राजते [1]यद्यतयो विशन्ति" इति श्रुतेः (महाना० ८।१४—कैव० ३) अथवा गुहाशब्देन मायादिक्षित्यन्तं तत्त्वजातमुच्यते तेन गुहायाः सकार्याया मायाया अरणी योनिरित्यर्थः । "शिवं प्रशान्तममृतंब्रह्म योनिमि"ति श्रुतेः (कैव० १।६) जगज्जन्मादिकारणमित्यर्थः । यद्वा, गुहस्य स्कन्दस्यारणीवोत्पादयित्री गुहाम्बेत्यर्थः । तत्र तारकासुरवधादिकार्यार्थि देवप्रार्थनापूर्वशिवशक्तिसमागमविघ्नाचरणं, तेन कोपशापादि, ततोऽग्निगङ्गाशरस्तम्भादियोगेन स्कन्दोत्पत्तिरित्यादिकथा शास्त्रेषु प्रसिद्धा । अथवा गुहशब्देनाहङ्कारो गृह्यते । तदुक्तं 'वाराहे'—

पुरुषो, विष्णुरित्युक्तः शिवो वा नाम नामतः ।
अव्यक्तन्तु उमादेवी श्रीर्वा पद्मनिभेक्षणा ।।

---

१. विभ्राजदेतद्यतयो इति पाठभेदः ।

ततसंयोगादहङ्कार: स च सेनापतिर्गुह:। इति। किञ्च गुहूसंवरणे धातो: गुह्यन्ते संव्रियन्तेऽविद्यया इतिगुहा अविद्यासंवृता जीवास्तेषामरणी जन्मस्थानं "यथाग्ने: क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति" इति श्रुते: (बृह० २।१।२०१) याज्ञवल्क्येऽपि—

'निःसरन्ति यथा लोहपिण्डात्तप्ता: स्फुलिङ्गका: ।
सकाशादात्मनस्तद्वदात्मान: प्रभवन्ति हि ।। (प्रायश्चित. अ. ६७)

इति ।

तथा-कतो नामर्षिस्तस्यापत्यं स्त्री इत्यर्थे गर्गादित्वाद्यञ्गि काती, तत: "सर्वत्र लोहितादिकतन्तेभ्य:" (पा०४।१।१८) इति ष्फ:पित्वात् ङीष। अखिलदेवतेज: समूहात्मिकाया देव्या: संज्ञेयं कात्यायनी। तदुक्तं 'वामनपुराणे'—

'तच्चापि तेजोवरमुत्तमं महन्नाम्ना पृथिव्यामभवत्प्रसिद्धम् ।
कात्यायनीत्येव तदा बभौ सा नाम्ना च तेनैव जगत्प्रसिद्धा ।।

इति । इयं चोड्याणपीठाभिमानिनी देवता । तदुक्तं 'कालिकापुराणे'—

'कात्यायनी चोड्डियाने कामाख्या कामरूपके ।
पूर्णेश्वरी पूर्णगिरौ चण्डी जालन्धरे स्मृता ।।

इति । 'देवीपुराणे' तु

'कं ब्रह्म कं शिर: प्रोक्तमश्मसारं च कं मतम् ।
धारणाद्वासनाद्वापि तेन कात्यायनी मता ।। इति ।

कमलेति कमले पद्मे अस्या:स्त इति कमला "[1]अर्शाद्यच्" (५।२।१२७) पद्मद्वयधारिणी लक्ष्मी:। कलावतीति, कला अनुत्तरानन्देच्छेशनादिविमर्शशक्तय: क्रोडीकृताशेषवाच्यवाचकात्मविश्वविस्फारा: सन्त्यस्या इति कलावती। कमलाकलावतीपदयोरर्थ: द्वितीये स्तवे २२शे श्लोके प्रदर्शितस्तत एव ज्ञेय:। इति शब्द: शब्दार्थोभयपरतया तत्तद्भूमिकाग्रहणेऽपि तत्तद्गुणनामभि: स्वरूपाभासपार्थक्यं द्योतयन्ति। हे देवि! त्वं परमार्थतो वास्तवेन स्वेन स्वरूपेण एका अद्वितीयाऽपि "यत्रनान्यत् पश्यति नान्यच्छृणोति [2]नान्यज्जिघ्रति" (छांदो० ७।२४।१) इत्यादि श्रुते:,। द्वैतदर्शनस्य हेयत्वादनित्यवस्तुविषयकतां प्रतिपाद्याद्वैतदृष्टि-
7 समर्थनेना तीयाऽपि सतो विद्यमाना निर्दिष्टरूपैर्बहुधा नानारूपतया पृथग्विधा

1 अर्शआदिभ्योऽच्। 2 नान्यद्विजानाति।

नर्तकी नटीव सम्यग् याथातथ्येन दृश्यसे अनुभूयसे । नन्विति नात्र शङ्का । यथा एकैव नटी रङ्गस्थाने विचित्राकल्पग्रहणेन नानानायिकाभूमिमवलम्ब्य तत्तदभिनेयदृश्याभिनयप्रदर्शने सहृदयैः सामाजिकैस्तत्तन्नायिकानिर्विशेषमेवानेकधाध्यक्षी क्रियते तद्वत्त्वमपीत्यर्थः । ननुरवधारणे आह्वाने वा । अम्बेत्यनुकर्षणीयम् । अथ-चेत्येवंबहुविधापि परमार्थतो नर्तकीवदेकैव सम्यग् दृग्विषया भवसीति अपिर्भिन्नक्रमः । अवधारणार्थो ननुः । परमार्थत एकत्वे बहुधाभवने चात्मानमत एवायं त्रेयीकुर्यादित्युक्तनीत्या स्वातन्त्र्यं विना हेत्वन्तराभावादित्यभिप्रायतो हेतुगर्भं विशेषणमाह—भगवतीति, भगमैश्वर्यलक्षणं माहात्म्यमस्ति यस्याः सा भगवती । "स भगवः कस्मिन्नु प्रतिष्ठितः" इति "स्वे महिम्नि इति होवाच", इति श्रुतेः । अन्यथा स्वातन्त्र्यविरहे एकधास्थित्यां जाडयमनैश्वर्यं च प्रसज्येयाताम् । तदुक्तमाचार्याभिनवगुप्तपादैः—

'अस्थास्यदेकरूपेण वपुषा चेन्महेश्वरः
महेश्वरत्वं संवित्त्वं तदत्यक्ष्यद्घटादिवत् ।। इति । (तं ३।१००।१)

नागानन्दोऽपि—यदिनिर्विमर्शः अनीश्वरो जडश्च प्रसज्येतेति । भगवतीशब्दव्युत्पत्तिस्तु 'देवीभागवते'—

'उत्पत्तिं प्रलयं चैव भूतानां गतिमागतिम् । → भूतानामगतिं गतिं इति पाठान्तरम्
अविद्याविद्ययोस्तत्त्वं वेत्तीति भगवत्यसौ' ।। इति । तं

इति । एवं त्वमेकाकिन्यपि बहुरूपावभासीत्यर्थः । तदुक्तं 'देवीपुराणे'

'एकाप्युपाधितो भूमा शिवा सर्वत्र विश्रुता ।
यथानुरज्यते वर्णैर्विचित्रैः स्फटिको मणिः ।।
तथा गुणवशाद् देवी भूमा नामेति वर्ण्यते ।
एको भूत्वा यथा मेघः पृथक्त्वेन च तिष्ठति ।।
वर्णतो रूपतश्चैव तथा गुणवशादुमा ।
नभसः पतितं तोयं यथा नानारसं भवेत् ।।
भूमेः रसविशेषेण तथा गुणवशादुमा ।
यथा द्रव्यविशेषेण वायुरेकः पृथग्भवेत् ।।
दुर्गन्धो वा सुगन्धो वा तथा गुणवशादुमा ।

यथा वा गार्हपत्योऽग्निरन्यसंज्ञान्तरं व्रजेत् ॥
दक्षिणाहवनीयादि ब्रह्मादिषु तथैव सा ।
एकत्वेन च भूम्ना च प्रोक्ता देवी निदर्शनैः ॥
तस्माद्भक्तिः परा कार्या सर्वगत्वप्रसिद्धये । इति ।

'कौर्मेऽपि'—

'एका कामेश्वरी शक्तिरनेकोपाधियोगतः ।
परावरेण रूपेण क्रीडते तस्य सन्निधौ ॥ इति ।

'सूतसंहितायामपि'—'लक्ष्मीर्वाग्गादिरूपेण नर्त्तकीव विभाति या' । इत्येवं त्वमपि स्वस्वातन्त्र्येण तासां दाक्षायण्यादीनां रूपेण परिणमसे अतस्त्वदंशभूतानां तासां तासां योगिनीनां यजनादिना त्वमेव प्रीणासीति भावः । यदुक्तं 'गीतोपनिषदि'—

'येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः ।
तेऽपि मामेव कौन्तेय ! यजन्त्यविधिपूर्वकम् ॥ (भ०गी० ९।२३)

एवं यदेकात्मकं रूपं समर्थितं तत्प्राधान्येन महामन्त्रमयं वर्णयिष्यंस्तस्य सहृदयसंवेद्यत्वं गमयति—

आनन्दलक्षणमनाहतनाम्नि देशे—
नादात्मना परिणतं तव रूपमीशे ! ।
प्रत्यङ्मुखेन मनसा परिचीयमानं
शंसन्ति नेत्रसलिलैः पुलकैश्च धन्याः ॥ १९ ॥

"आनन्दो ब्रह्मेति व्यजानादि"ति श्रुतेः (तैत्ति० ३।६) आनन्दरूपा ब्रह्मात्मा तुरीयाद्याशक्तिर्लक्ष्यते ज्ञायते येन तदानन्दलक्षणं तदभिव्यञ्जकत्वात्तुरीयानन्द-शक्तिरेवहि सकलविश्वाधारभूतत्वात् सर्वानन्दभूमिकोत्तीर्णनिरतिशयब्रह्मानन्दा-ख्या स्वयंप्रकाशैकस्वरूपा तत एव विश्वोदयविलयाम्नानात्—

'आधारमानन्दमखण्डबोधं यस्मिल्लयं याति पुरत्रयञ्च । (कैव०१४)
एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।

खं वायुर्ज्योतिरापश्च पृथ्वी विश्वस्य धारिणी ।। (मुण्ड० २।१।३)

इति श्रुतः ।

अयमानन्दो मनुष्यानन्दादिहिरण्यगर्भान्तामूर्ध्वोर्ध्वं तत्तच्छतगुणपरिमितानामा- 'बृहदा नन्दानां पराकाष्ठा । एत आनन्दाः प्रोक्तपरमानन्दस्योदधेरिव बिन्दवः। यथा रण्यके'—"एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" (बृह० ४।३।३१)

"स यो मनुष्याणां राद्धः समृद्धो भवत्यन्येषामधिपतिः सर्वमानुष्यैर्भोगैः सम्पन्नतमः स मनुष्याणां परम आनन्दः । अथ ये शतं मनुष्याणामानन्दाः स एको गन्धर्वलोके आनन्दोऽथ ये शतं गन्धर्वलोके आनन्दाः स एकः कर्मदेवानामानन्दो- ये कर्मणा देवत्वमभिसंपद्यन्ते । अथ ये शतं कर्मदेवानामानन्दाः स एकः आजान देवानामानन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथैष परम आनन्दः एषब्रह्मलोकः सम्राडिति होवाच याज्ञवल्क्यः" इति । (बृह० ४।३।३३)

"सैषा आनन्दस्य मीमांसा भवती" (तैत्ति० २।८) त्यत्रश्रुतावप्या- नन्दस्य ब्रह्मणःसैषा तदभिन्ना चिच्छक्तिर्मीमांसा विमर्शात्मिका भवतीत्यर्थः ।

'रुद्रयामलेऽपि'

'शब्दब्रह्ममयं वक्ष्येऽनाहतस्तत्र दृश्यते ।
तेनानाहतपद्माख्यं योगिनां योगसाधनम् ।।
आनन्दसदनं तत्तु सिद्धेनाधिष्ठितं परम् ।

इति । अथ च आनन्दाख्या परा कौलिकी शक्तिर्यतो विश्वं कुलाख्यं विसृज्यते । नहि केवलात्पुंसः स्त्रियो वा केवलाया विसर्जने सामर्थ्यं दृश्यते, अपितु तदुभय- यामलीभावलक्षणानन्दोत्कर्षजन्य एव सन्ततिप्रसरः । तस्या लक्षयत्यवगमयतीति लक्षणमवबोधकं "कर्तरिल्युट्प्रत्ययः । तदुक्तं 'श्रीतन्त्रालोके'—

'अकुलस्यादिदेवस्य कुलप्रथनशालिनी ।
कौलिकी सा परा शक्तिरवियुक्तो यया प्रभुः ।।
तयोर्यद्यामलं रूपं संघट्ट इति स स्मृतः ।
आनन्दशक्तिः सैवोक्ता यतो विश्वं विसृज्यते ।। (३।६७-६८)

इति । श्रुतिरपि—"आनन्दाद्ध्येव हि खल्विमानि भूतानि जायन्ते आनन्देन जातानि जीवन्ति आनन्दं प्रत्यभिसंविशन्ति" (तैत्ति० ३।६) इति । 'सौभाग्यसुधोदयेऽपि'—

'स्वाभाविकी स्फुरत्ता विमर्शरूपास्य विद्यते शक्तिः ।
सैव चराचरमखिलं जनयति जगदेतदपि च संहरति ।।

इत्यत्र करणार्थेन ल्युटा नादस्योपायत्वं कर्तृल्युटा च प्रयोजकत्वं सूच्यते तस्य च प्राणोच्चाराश्रयत्वेनाणवोपाये परिगणना । तदुक्तं 'पूर्वशास्त्रे'—

'उच्चारकरणध्यानवर्णस्थानप्रकल्पनैः ।
जायते यः समावेश आणवोऽसावुदीरितः ।। इति । मा०वि०१।२१

कुत्र तदित्यपेक्षायां तदभिव्यक्तिस्थानमाह—अनाहतनाम्निदेशे हृदयाख्ये द्वादशदलपद्मकर्णिकायां हे ईशि ! ईशित्रि ! स्वतन्त्रपरभैरवि ! तव रूपं नादात्मना-शेषवाचकाविभागपरामर्शमयानच्ककलारूपेण परिणतं स्फुरितं सत् "प्राक् संवित्-प्राणे परिणता" इत्युक्तनीत्या "नैसर्गिकः प्राणसम्बन्धः" ( ३।४३ ) इति शिवसूत्रस्थित्या च विश्ववैचित्र्यावबिभासयिषया सङ्कोचावभासपुरःसरं परासंविदेव हि सङ्कुचदशेषभावसमूहस्फुरत्तात्मिकां प्राणनात्मपरिमितग्राहकभूमिका-माश्रयति । सैव नादात्मानच्ककलानाहतशब्दाभिधेया, तात्स्थ्यादुपचारात्तदा-धारोऽप्यनाहतनामा हृद्देशः । तदुक्तम्—

योऽसौ नादात्मकः शब्दः सर्वप्राणिष्ववस्थितः ।

इति । तथा—

'नास्योच्चारयिता कश्चित् प्रतिहन्ता न विद्यते ।
स्वयमुच्चरते देवः प्राणिनामुरसि स्थितः ।। इति । (स्व० ७ प०५९)

यदुक्तं 'श्रीनटनानन्दनाथैश्चिद्वल्लल्याम्'—

मित्रावरुणसदनाद्वायुनिरोधेन स्वाधिष्ठानादिकमलभेदपुरःसरं द्वादशार्णरबिन्दासनस्थ परमशिवाङ्कमुपसर्पन्ती महामातृका कुण्डलिनी बहुविधनादात्मिका, याऽनुभूयते सा समाधिसमधिगतसर्वैश्वर्यैर्महामाहेश्वरैः स्वात्मत्वेन परिशील्यते

'भैरवयामले' तु

'तरस्थं तरमध्यस्थं तरस्थं तरमध्यगम् ।
तरं तरहदण्डस्थं यो जानाति स कौलिकः ॥
'शीर्षपाणिचरणैर्विवर्जितं-
ह्यक्षरं भवरुजापहं परम् ।
यस्य हृत्कुहरगं प्रवर्तते
तेन मृत्युरपि भस्मसात्कृतः ॥
'शैवं चैव तथा शाक्तं सामरस्यं तु मध्यमम् ।
एकीभूतं तदाकाले तस्मात्तद्वर्णमुत्तमम् ॥
शून्यात्प्रसरमुत्पन्नं प्रसरोत्थमकालकम् ।
अकालात्तत्वमुत्पन्नं विश्वं यत् पञ्चधा स्थितम् ॥
ध्यानस्थानविहीनो यो रूपोच्चारविवर्जितः ।
अनाहतो नदत्यन्तर्मुखान्मुखपदे स्थितः ॥
धामत्रयादिरहितो योगीशो तासु खस्थितः ।
सत्यं तु कथितं ताभिः स्वयमुच्चरते तु सः ॥
शून्याच्छम्भुस्ततः शक्तिः शक्तेर्धामत्रयात्मकम् ।
प्रभवेच्च ततः सर्वमादिवर्णकदम्बकम् ॥
अनुत्तरं तदेवोक्तं सद्यः कौलिकसिद्धिदम् ।
तरहं च तदेव स्याच्चन्द्रभास्करमध्यगम् ॥
तकारः सोमधाम स्याद्यो रेफः स तु भास्करः ।
दण्डवद्रमते वह्निरेकीभूतं तदात्मकम् ॥

इतिस्थित्या शाक्तीयतुरीयायार्णध्वन्यात्मनानारतमुच्चरता नादरूपेणपरैव भट्टारिका प्रस्फुरितेत्यर्थः । अस्यैवागमान्तरेषु श्रीगुरुनाथतयाम्नानम् । यथा महानयप्रकाशे—

'वस्तुतस्त्वस्वरोल्लासप्रथनोच्छूनतात्मकः ।
यो विभाति महानादस्तमजं देशिकं श्रये ॥ इति ।

'चिद्गगनचन्द्रिकायामपि'—

ह्रस्वरोल्लसनबीजमग्रिमोच्छूनतावपुरपाकृतक्रमः
नाद एष तव विश्वदेशिकः कोऽपि स स्मृतिविमर्श ईश्वरे ॥

इति । रहस्याम्नायेषु नादस्यैव महामन्त्रात्मतां निर्दिशन्ति गुरुपादाः । यदुक्तं 'राजराजभट्टारके'—

वर्णात्मको न मन्त्रो दशभुजदेहो न पञ्चवदनोऽपि ।
सङ्कल्पपूर्वकोटौ नादोल्लासो भवेन्मन्त्रः ॥

इति । 'विज्ञानभैरवेऽपि'—

भूयोभूयः परे भावे भावना भाव्यते हि या ।
जपः सोऽत्र स्वयं नादो मन्त्रात्मा जप्य ईदृशः ॥ (१४५) इति ।

प्रत्यङ्मुखेन विषयलक्षणबाह्याभासेभ्यः परावृत्त्यान्तरात्मोन्मुखेन मनसा परिचीयमानमुपलक्ष्यमाणं स्वात्मत्वेनानुभूयमानं धन्या जना नेत्रसलिलैरश्रुभिरनुभूयमानानन्दरसातिवृद्धेरन्तरमान्त्यास्तच्छ्वना बहिः परिवहत्परीवाहलक्षणैः । तथा तत् समावेशस्पर्शसुखोद्भूतैः पुलकैः रोमाञ्चैश्च करणभूतैर्लिङ्गैः शंसन्ति वेदयन्ति सूचयन्तीत्यर्थः । अत्र परिचयपुलकादेर्गम्यगमकभावात् स्वानन्दरसानुभवचर्वणपारवश्यं धन्यानां सहृदयैः स्फुटं संवेद्यते । अथ च ये शंसन्ति ते धन्या इति पृथग्वाक्यच्छेदभङ्ग्या एतदेव धन्यत्वं धन्यानामिति विधीयमानत्वं ज्ञेयमिति ॥ १९ ॥

ननु शक्तिमानेव वह्न्यादिस्तथा तथा दाहादिकार्यं कुर्वन् दृश्यते । का नाम सा शक्तिः इत्याशङ्क्य सर्ववस्तुस्वभाव एव शक्त्यात्मा कार्योत्पादनपटुः स्वभावनाशे तन्नाशादिति सर्वत्र सारप्राया सैवेत्याशयेनाह—

त्वं चन्द्रिका शशिनि तिग्मरुचौ रुचिस्त्वं
त्वं चेतनासि पुरुषे पवने बलं त्वम् ।
त्वं स्वादुतासि सलिले शिखिनि त्वमूष्मा
निःसारमेव निखिलं त्वदृते यदि स्यात् ॥ २० ॥

हे देवीत्यध्याहार्यम् । शशिनि चन्द्रे चन्द्रिका ज्योत्स्नाशक्तिराह्लादपुरुषिकात्मा

विश्वाप्यायनकारिणी त्वमसि, शक्तया वै खलु शक्तिमांस्तयाऽभिधीयते, विना शक्तया शक्तिमतोऽसारप्रायत्वात् स्वात्मलोपप्रसक्तेः । यदुक्तम्—

'शक्तया विना शिवे सूक्ष्मे नाम धाम न विद्यते' । इति ।

शक्तिःपदार्थस्यात्मा स्वभावापरपर्यायः, स्वभावलोपे स्वस्याभावापत्तेः ।

"यश्चन्द्रतारके [1]तिष्ठन् चन्द्रतारकादन्तरो यं चन्द्रतारकं न वेद यस्य चन्द्रतारकं शरीरं यश्चन्द्रतारकमन्तरो यमयत्येष ते आत्माऽन्तर्याम्यमृतः" (बृह० ३।७।११) इति श्रुतेः ।

पुष्णामि चौ[2]षधी सर्वाः सोमो भूत्वा रसात्मकः । (भ०गी० १५।१३)

इति स्मृतेः । एवं चन्द्रान्तःस्थितपुरुषात्मब्रह्मोपासनस्य बृहदारण्यकगार्ग्याजातशत्रुसंवादे सफलस्य श्रूयमाणत्वात् । 'य एवासौ चन्द्रे पुरुष एतमेवाहं ब्रह्मोपासे' (बृह० २।१।३) इति । तथा—स य एतमेवमुपास्ते अहर[3]हः सुतः प्रसुतो भवति नास्यान्नं क्षीयते (बृह० २।१।३) इति श्रुतेः । तथा त्वं तिगमरुचौ तीक्ष्णकिरणेऽर्के रुचिर्द्युतिर्विश्वप्रकाशिका तापिनीशक्तिरसीत्यर्थः । एवं सूर्यमण्डलान्तःस्थित पुरुषात्मब्रह्मण उपास्यतयाम्नायप्रसिद्धेः ।

"हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।
तत्ते पूषान्नपावृणु सत्यधर्माय दृष्टये ।।"

"पूषन्नेकर्षे ! यमसूर्य ! प्राजापत्य ! व्यूह रश्मीन्, समूह तेजो यत्ते रूपं कल्याणतमं तत्ते पश्यामि योऽसावसौ पुरुषः सोऽहमस्मीति" श्रुतेः (ईशा०१६–बृह ५।१५।१ अजातशत्रुगार्ग्यसंवादेऽपि—'य एवासावादित्ये पुरुष एतमेवाहंब्रह्मोपासे' (बृह० २।१।२) इति । एवं विशिष्टोपासनायाः फलमपि तत्रैव श्रूयते

"स य एतमेवमुपास्तेऽतिष्ठाः सर्वेषां भू*तानां राजा भवति" (बृह० २।१।२,३) इति श्रुतिः । "य आदित्ये तिष्ठन्" (बृह० ३।७।९) इति च । 'स्मृतिश्च'

---

1. तिष्ठंश्चन्द्र । 2. चौषधीः । 3. अहरहर्ह ।
* भूतानां मूर्धा राजा । इति मु०पु० पाठान्तराणि

'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ।। भ०गी १५।१२

इति । "तेजश्चास्मि विभावसौ" इति । "प्रभास्मि शशिसूर्ययोरिति" तपाम्यमहं-वर्षमिति च । तथा पुरुषे निष्कले ब्रह्मणि स्वभावात्मा चेतना चिच्छक्ति-स्त्वमसि । तत्स्फाररूपाणां विश्वशक्तीनां तत्रैव लयोदयसंभवात् विश्रान्तिस्व-रूपाविनाशिनी कला । नहि पुरुषस्य द्रष्टुर्दृष्ट्यादिशब्दवाच्या कदाचित् सा शक्ति-र्विपरिलुप्यते इतिवक्तुं शक्यते अविनाशित्वात्तस्याः । "नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वादित्यादिश्रुतेः" (बृह० ४।३।२३) "पौरुषं नृषु" इतिस्मृतेश्च निष्कलत्वमित्यनेन च निष्कान्ताःकला यस्मादिति तत्पुरुषेण पुरुषे कलापूर्णत्वं द्योत्यते नतु तच्छून्यत्वं । तथात्वे तदुदयविरोधः प्रसज्यते । तथाच श्रुतिः—'यथेमा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तङ्गच्छन्ति भिद्येते तासां नामरूपे समुद्र इत्येवं प्रोच्यते । एवमेवास्य परिद्रष्टुः, इमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति, भिद्येते तासां नामरूपे पुरुषं इत्येवंप्रोच्यते स एषो कलो मृतो भवति"

इति । अन्यत्रापि—

'चेतनेति ततः शक्तिर्मांकाप्यालिङ्ग्य तस्युषी ।
हेतुः सङ्कल्पजालस्य मनोऽधिष्ठायिनी शुभा' ।। भ०स०

इति । तथा—"पुरुषे शोडशकले तामाहुरमृतां कलाम्" । इति, यद्वा परमेश्वरो हि "स्वेच्छया स्वभित्तौ विश्वमुन्मीलयति" (प्र.हृ.१।२) इत्युक्तेर्जगन्नाटकलीलामनुकुर्वन् पूर्णाहन्ताप्रथानुभवविजृम्भाचमत्कारसारतयात्यन्तस्वच्छां स्वात्मसंविदमनुभवन्नेव "नर्तक आत्मा" (३।९।८९) इति इति शिवसूत्रस्थित्या नतृव्यपदेशतामेत्य जननाद्यवस्थामयैः सन्धिभिः परिमितप्रमातृभावभूमिका परिग्रहणात्मिकाम-भिनेया दशां स्वेच्छया स्वीकरोति, सैव दशा पुरुष इति व्यपदेशौचितीं भजते । अत्र "प्रेक्षकाणीन्द्रियाणि" (३।११।९१) इति शिवसूत्रनीत्या शृङ्गारादि-रसास्वादस्थानीयं शब्दाद्यनुभवसुखं मरीचिमयेन्द्रियैर्नाट्यप्रेक्षकैरास्वाद्यते, तदु-क्तम्—

स एष विश्वनाटकशैलूषः शुद्धसंविच्छमयुर्भी वर्णकपरिग्रहमयीं क्कोपि। दशा पुरुषो भवति । तथा

'जननशैशवयौवनवार्धकव्ययमयैरखिलैरपिसन्धिभिः ।
अभिनयन्नपि पौरुषनाटकं परिणतो स शिवोऽस्मि महानटः' ।।

इति । तस्मिन् पञ्चविंशके तत्त्वप्रसरे चेतनाकर्तृत्वज्ञत्वात्मिका गृहीतसङ्कोचस्वभावरूपा एव त्वमसि । अथवा मायावेदान्तिभिः सांख्यादिसिद्धान्तस्थैश्च प्रतिपन्नोऽव्यक्तादिपर्यायप्रकृतितत्त्वादुपरिस्थोऽकर्त्रभोक्तृस्वभाव उदासीनः पुरुषस्तदुपरि न किञ्चित्तत्त्वान्तरं तस्यैव पार्यन्तिकपरमपदत्वेनोद्घोषणात् ।

'इन्द्रियेभ्यः परा ह्यर्था[1] अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान परः ।।
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः ।। (कठो० ३।१०)

इति कठश्रुतेः ।

नैवमनुत्तरपथयायिनां समयः । यतः पुरुषतत्त्वादुपरि परमशिवपर्यन्तं बहूनि तत्त्वान्तराणि, तस्मात्तत्रैव पराकाष्ठालक्षणपरमागतित्वं नोपपद्यते । किञ्चाकर्तृकत्वाद्यौदासीन्यमपि तदभ्युपगतप्रकृतिप्रेरकत्वमात्रेण यावत् विमर्शपदवीमवतरति । तावन्मात्रेणैव तेषां स्वोक्तिव्याघातप्रसक्तेः ।

वस्तुतः पुरुषः सर्वज्ञत्वकर्तृत्वेऽपि स्वात्माख्यातिवशात् सङ्कुचित इवाभाति अकर्तृत्वादिपक्षेऽपि श्रीमन्महेश्वरानन्दनाथैः प्रत्याख्यातः । यथा––

अथ ये तमुदासीनमाहुर्नित्योदितोद्यमम् ।
त एवं प्रतिवक्तव्यः सर्वदा चेदनुद्यमः ।।
तेन मृत्पिण्डकल्पेन जगतः किं प्रयोजनम् ।
किमित्यङ्गीकृतिस्तस्य किं प्रमाणोऽपि वा भवेत् ।।
यदुच्येत तदैवं तदौदासीन्यं चिदात्मनः ।
प्रवर्तयति विश्वस्मिन् प्रकृतिं विकृतिस्पृशम् ।।
अन्यथा प्रकृतेःकिञ्चिन्न प्रागल्भ्यं प्रवर्तते ।

1. ह्यर्थेभ्यश्च । इति पाठान्तरम्

तत्कथं स्वीकृतिस्तस्य विश्वातिक्रान्ततेजसः ।।
तेनैव च प्रमाणेन तस्य सिद्धिर्भवेदिति ।।
अत्रोच्यते तथा सा चेदप्यौदासीन्यकल्पना ।
अनुदासीन एवेति तात्पर्यं पर्यवस्यति ।।
वैलक्षण्यात् प्रकृत्यादेः सूक्ष्ममुद्यममास्थितः ।
इत्यसौ निष्क्रियो न स्याद्यतः सूक्ष्मापि सा क्रिया ।।
स्यवीयसीः क्रियाः सूते प्रकृतौ विकृतिष्वपि ।
जडा अपि स्वभावेन देहाक्षभुवनादयः ।।
यत्प्रभावात्प्रवर्तन्ते स कथं निष्क्रियो भवेत् ।

इति । यद्वा "पुरुषो विष्णुरित्युक्तः शिवो वा नाम नामतः" । इति वराहोक्तेः पुरुषे विष्णौ शिवे वा वैष्णवी शैवी वेत्यभिधाना चेतनाशक्तिः स्वातन्त्र्यलक्षणा स्वस्वकार्यनिर्वाहिकेत्यर्थः । यद्वा पुरुषे साधके चेतना मन्त्रवीर्ययोजनात्मिका शक्तिः । तदुक्तं सूत्रेषु—

"महाह्रदानुसन्धान्मन्त्रवीर्यानुभवः" इति । (शि०सू० १।२२)

'महाह्रद इति प्रोक्ता शक्तिर्भगवती परा ।
अनुसन्धानमित्युक्तं तत्तादात्म्यविमर्शनम् ।।
मन्त्रवीर्यमिति प्रोक्तं पूर्णाहन्ताविमर्शनम् ।
तदीयोऽनुभवस्तस्य स्फुरणं स्वात्मनः स्फुटम् ।। (शि०सू०वा, ११०–११)

इति । तथा पवने सन्ततगमनशीले वायौ वलं "यो वायौ तिष्ठन्" (बृह० ३।७।७) इतिश्रुत्या वायुगतसर्वसञ्चरणग्रन्थनादिशक्तिरूपं वीर्यं त्वमसि त्वय्येव सूत्रान्तः प्रोतमणिवत् समस्तं सन्दृब्धमस्ति, अन्यथा मण्यादीनां सूत्रापगमे इव सर्वेषामवस्रंसनं स्यात् ।

'तेनाहुः किल संवित् प्राक् प्राणे परिणता तथा ।
अन्तःकरणतत्त्वस्य वायुराश्रयतांगतः ।।

Sloka 20 remaining com. upto major part of Sloka 29 missing pp. 63–104.

इति । श्रीतन्त्रालोकस्थित्या सर्वाधारा पूर्णसंविद्रूपा पराशक्तिरेवेत्यर्थः । 'वायुर्वै गौतम ! तत्सूत्रं, वायुना वै गौतमसूत्रेणायं लोकः परश्च लोकः

तनुषु बहिरनुभूयमानकाठिन्यादिलक्षणासु मध्ये, निर्धारणे सप्तमी, कस्याश्चनापि स्वैरं स्तोतुमिष्यमाणाया अन्यतमाया मूर्तेर्वैभवं साकल्येन वर्णनीयगुणभेदप्रभेद विस्तारवैचित्र्यं गिरांपत्या वाक्पतिनाऽपि वक्तुं वर्णयितुं नैव शक्यते न पार्यते। तादृशी सा त्वं मया वाक्पत्यपेक्षया मन्दप्रज्ञेन किल स्तुतासि परिणुतासि। किलानुनयार्थे। तेन स्वमनः सान्त्वनापर्यवसायिनी स्तुतिः इति। वस्तुतस्तु मम त्वत्स्तुतिव्यापारस्यदुष्करत्वेन तदनर्हतया स्तोत्रमिदं स्ववैयात्यचातुर्याविष्करणं मन्दाक्षात्रहमिति हेतोर्भवत्याम्बया पुत्रापराधसहनशीलनत्वात् तितिक्षितव्यं क्षन्तव्य मद्वाग्दर्यमेतदिति। 'किल शब्दस्तु वार्तायां संभाव्यानुनयार्थयोः' इतिविश्वः ॥२९॥

अथ विश्वानुग्रहार्थं गुरुभावासादनायोपायक्रमं प्रदर्शयन् ध्यानव्यापारेण देवीनामरस्यमेव गुरुत्वकारणम्। इति सूचयति—

> कालाग्निकोटिरमणान्तमम्ब! षडध्वशुद्धा—
> वाप्लावनेषु भवतीममृतौघवृष्टिम्।
> श्यामां घनस्तनतटां सकलीकृतौ च
> ध्यायन्त एव जगतां गुरवो भवन्ति ॥ ३० ॥

शब्दार्थत्वेनाध्वानो हि षट् प्रकाशविमर्शकणात्मान इत्यागमेषु प्रसिद्धतयाम्नायते। तदुक्तं 'सिद्धपादैः'—

> 'यस्य विमर्शस्य कणो मन्त्रपदार्णात्मकस्त्रिधा शब्दः।
> पुरतत्त्वकलात्मार्थो धर्मिण इत्थं प्रकाशस्य ॥

इति। ते च—

> वर्णः कला पदं तत्त्वं मन्त्रो भुवनमेव च।
> इत्यध्वषट्कं देवेशि!'

इति नीत्या वर्णाः पदानि मन्त्राः कलास्तत्वानि भुवनानीति। तत्र वर्णाः पञ्चाशल्लोकप्रसिद्धाः। पदान्यानन्त्येऽपि व्योमव्याप्यादिमन्त्रमयादियैकाशीतिः। मन्त्राश्च तद्वदानन्त्येऽपि ब्रह्मपञ्चकमङ्गषट्कञ्चेति सङ्कोचदृष्ट्या एकादश। निवृत्याद्याः कलाः पञ्च। तत्त्वानि शिवादिक्षित्यन्तानि षट्त्रिंशत्। भुवनानि च कालाग्नि-

रुद्रादीन्यनाश्रितान्तानीति चतुर्विंशत्यधिकं शतद्वयम् । एतदखिलमपि कला-पञ्चकेन क्रोडीक्रियते । तथाहि-निवृत्तौ कलायां-क्षकार एको वर्णः, अष्टाविंशतिः पदानि, हृदयसद्योजातौ मन्त्रौ, पृथिवीतत्त्वमेकम्, कालाग्निरुद्रादीनि भद्रकाल्यान्ता-न्यष्टोत्तरशतं भुवनानि । प्रतिष्ठायां-हादयष्ठान्ता वर्णास्त्रयोविंशतिः, एकविंशतिः पदानि, शिरोवामदेवौ मन्त्रौ, अप्तत्त्वादीनि प्रकृत्यन्तानि त्रयोविंशतिस्तत्त्वानि, अमरेशादीनि श्रीकण्ठान्तानि षट्पञ्चाशद् भुवनानि। विद्यायां-ञादिघान्ताः सप्त वर्णाः, विंशतिः पदानि, शिखाघोरौ मन्त्रौ, पुरुषप्रभृतीनि मायापर्यन्तानि सप्त वर्णाः, विंशतिःपदानि, शिखाघोरौ मन्त्रौ, पुरुषप्रभृतीनि मायापर्यन्तानि सप्त तत्त्वानि, भीमादीन्यङ्गुष्ठमात्रान्तानि सप्तविंशतिर्भुवनानि । शान्तौ-गखका-स्त्रयो वर्णाः, पदान्येकादश, कवचतत्पुरुषौ मन्त्रौ शुद्धविद्येश्वरसदाशिवास्तत्त्वानि त्रीणि, वामादिसदाशिवान्तमष्टादश भुवनानि । शान्त्यतीतायां-वर्णाः षोडश स्वराः, पदमेकम्, ईशाननेत्रास्त्राणि मन्त्रास्त्रयः, शिवतत्त्वमेकं यः 'शक्तिस्वभावः' इत्या-म्नायते, निवृत्त्यादीन्यनाश्रितान्तानि पञ्चदश भुवनानि । इति विवेक इति 'महे-श्वरानन्दपादाः'। एषां वर्णकलादीनां स्वात्मपरामर्शोपायत्वादध्वशब्देन व्यपदेशः । तदुक्तं 'श्रीस्वच्छन्दे'—

मुक्तानां शिवताव्यक्तिकारणं विश्वमेव हि ।
शिवता व्यक्तिमार्गत्वात् ते सर्वेऽपि कलादयः ॥
अध्वशब्देन कथ्यते ते सर्वे बन्धना अपि ।

इति । एवं—

सर्वतत्त्वमयः कायस्तं चेदानीं शृणु प्रिये ! ।
पृथिवी कठिनत्वेन द्रवत्वेऽम्भः प्रकीर्तितम् ॥

इति'त्रिशिरोभैरवोक्तनीत्या षट्त्रिंशत्तत्त्वमयमिदं शरीरमपि कलापञ्चकेन व्याप्तम् पादाङ्गुष्ठादिशिखान्तं षडध्वविभागस्तु प्रायश आगमेषु वितानितः । तत्र ब्रह्माण्डवत् पिण्डाण्डेऽपि सौक्ष्म्येण भुवनाध्वविभागस्तत्र कटाहोर्ध्वे कालाग्निरुद्र भुवनम् । तदुक्तं—

'कालाग्नेर्भुवनं चोर्ध्वे कोटियोजनमुच्छ्रितम् ।
लोकानां भस्मसाद्भावभयान्नोर्ध्वं स वीक्षते ॥

इत्यादि 'श्रीस्वच्छन्दादिषु' द्रष्टव्यम् । एवं कालाग्निरुद्रभुवनं दक्षपादाङ्गुष्ठः । पूजायोग्यं शरीरं सम्पादयितुं प्राणायामैः सूक्ष्मशरीरशुद्धौ कृतायां स्थूलशरीरशुद्धिं विधातुं शोषणधारणापूर्वं दक्षिणपादाङ्गुष्ठात् कालाग्निमुत्थितं ध्यात्वा तज्ज्वालाभिः सबाह्याभ्यन्तरं शरीरं भस्मीभूतं भावयेदित्यभियुक्तोक्ताऽऽग्नेयी धारणा । तदुक्तं 'विज्ञानभैरवे,—

कालाग्निना कालपदादुत्थितेन स्वकं पुरम् ।
प्लुष्टं विचिन्तयेदन्ते शान्ताभासः प्रजायते ।। (५२)

इत्येतदभिप्रेत्याह षडध्वात्मकस्य शरीरस्यार्चनार्हतासम्पादनाय शुद्धौ निमित्ते कालाग्निरुद्रापेक्षया कोटिगुणिता रुचिर्दीप्तिर्यस्यास्तां पाशदाहकारिणीमित्यर्थः । प्रलयावधि शिवाज्ञया कालाग्निरधोमुखःस्थितो यन्मुखाज्ज्वाला दशकोटियोजनानि निःसरन्ति । स एव प्रलये शिवेच्छयोर्ध्वमुखो भूत्वा तपोलोकान्तं विश्वं प्लुष्यति ।

तथाविधात् कालाग्नेरप्यधिकरुचिरित्यर्थः । एतदुक्तं भवति—कालाग्निः केवलं पृथ्व्यण्डमात्रमेव दहति, भवती तु कृत्स्नमण्डत्रयमिति । यद्वा कालाग्निरुद्रसम्बन्धिनो कोटियोजननिःसृता रुचिर्दीप्तिस्तद्रूपा ताम् । तथा भस्मीभूतस्य शरीरस्य भस्मनि प्रचण्डवायुना दशसु दिक्षु विक्षिप्यमाणे तत्स्थानस्याप्लावनेषु प्रक्षालनेषु भवतीं त्वां द्वादशान्तस्थचिच्चन्द्रनिःसृताममृतौघस्य शाक्तामृतरसप्रवाहस्य वृष्टिमासारवर्षणं तद्रूपामाप्यायनकारिणीमित्यर्थः । यद्वाप्यायनेष्वमृतरसाप्लावनेष्वःमृतौघवृष्टिं सौम्याग्नेयसामरस्योद्भूतामृतद्रवासाररूपाम् । तथाच रहस्यसम्प्रदायविदामुक्तिः—

ब्रह्मरन्ध्राधोमुखसहस्रदलकमलकर्णिकामध्यगत-पूर्णसोममण्डलमध्यस्थित-त्रिकोणान्तरस्थमनच्कानुत्तरात्महार्धकलात्मकं सौम्यं, मूलाधारचतुर्दलकमलकर्णिकामध्यगतपूर्णवह्निमण्डलमध्यगतत्रिकोणान्तरस्थितमनच्कात्मकसपरार्धकलारूपमाग्नेयं, तयोर्द्वयोरमृतानलकुण्डलिनीरूपयोरध ऊर्ध्वं प्रसरतोर्योनिलिङ्गाकारयोः सामरस्यात् प्रसृतामृतद्रवासारैराप्लावयेदिति । तदुक्तं—'सन्तर्पयेत्पुनर्देवीं सौम्याग्नेयामृतद्रवै'रिति । इयं वारुणी धारणा । उक्तंहि—

द्वादशान्तपतितेन शाक्तामृतजलेन तत् स्थानं क्षालितं भावयेदिति तदन-

"ॐ हं संविन्मयोऽहमस्मि"। 'नाहमस्मि नचान्योऽस्मि ध्येयं नात्र न विद्यते।
आनन्दपदसंलीनं मनः समरसीगतम्' ॥

इत्याकाशीयधारणया परमाकाशे कल्पनातीते सर्वं विलीनं विभाव्य परमानन्दमयमात्मानं सञ्चिन्त्य ततो दिव्यदेहावतरणाय विचारचोपरि ऊर्ध्वरेचकक्रमेणात्मानं दिव्यां मूर्तिमवतार्यं

"रक्तपद्मनिभां देवीं बालार्ककिरणारुणाम्"

इत्युक्तनीत्या सकलीकृतौ दिव्यमूर्तिसाक्षात्करणे च श्यामां श्यामवर्णां षोडशवार्षिकीञ्च ध्यानस्य संवृत्ते हि श्यामवर्णत्वम्। तथा घनस्तनतटां पीनकुचभारां अथवा सकलतया कलातत्त्वोपलक्षितपृथिव्यादिपर्यन्तैस्त्रिंशत्तत्त्वैर्वर्तते सकलं स्थूलं शरीरं तत्कृतौ, सम्पूर्णाः कला मुखाद्यवयवास्तत्कृतौ इति वा। कला नवावरणगता आवरणदेव्यो रश्मिरूपास्ताभिः सह वर्तते या मध्ये बैन्दवासनस्था मूर्तिस्तत्कृतौ वा, तयोर्ध्वाम्नायक्रमे दण्डिमुण्डिभङ्ग्या सकलीकरणमिति वा। हे अम्ब! एवं ध्यायन्तः साधका जगतां तद्वर्तिनां जनानां गुरवो मान्या उपदेष्टारश्च भवन्त्येव।

एवोऽवधारणे तदुक्तं 'विरूपाक्षपादैः'—

कालाग्निकोटिदीप्तां दाहे पाशोच्चयस्य पटुतृप्त्यै।
अमृतौघवृष्टिमूर्तिं स्मर शक्तिं भव गुरुर्जगताम् ॥

इति, अनुग्राहिकायास्तव गुरुमूर्तेर्ध्यायिनां सकलीकरणे त्वदात्मसामरस्यसमावेशात् परशिवतालाभोपायासादने सति जनानुजिघृक्षाव्यापारक्षमत्वं किल सम्भाव्यते अतएव गुरुत्वसम्पत्तेः सार्थक्यम्। तदुक्तम्—'गुरुरुपायः। शि.सू. (२।६।२६) 'विज्ञानभैरवेऽपि'—

'न वह्नेर्दाहिका शक्तिर्व्यतिरिक्ता विभाव्यते।
केवलं ज्ञानसत्तायां प्रारम्भोऽयं प्रवेशने ॥ (१९)
शक्त्यवस्थाप्रविष्टस्य निर्विभागेन भावना।
तदासौ शिवरूपी स्याच्छैवी मुखमिहोच्यते ॥ (२०)
यथालोकेन दीपस्य किरणैर्भास्करस्य वा।
ज्ञायते दिग्विभागादि तद्वच्छक्त्या शिवः प्रिये! ॥ (२१)

इति ॥ ३० ॥

एवं सूचितसामरस्यव्यापारेणैव देवीं संविन्मयीं गुरुमूर्तित्वेन परामृशं-स्तद्विषयान् परेषां विकल्पानभिधत्ते—

विद्यां परां कतिचिदम्बरमम्ब ! केचिद्-
आनन्दमेव कतिचित्कतिचिच्च मायाम् ।
त्वां विश्वमाहुरपरे वयमामनामः
साक्षादपारकरुणां गुरुमूर्तिमेव ॥ ३१ ॥

हे अम्ब ! कतिचिदौपनिषदास्त्वां परां विद्यामाहुर्वदन्ति, विद्यते ज्ञायते लभ्यते विचार्यते च स्वात्मरूपः परमशिवोऽनयेति कृत्वा विद्या । साचोपनिषत्सु परापर-रूपेण द्विधोच्यते, तत्र परा "सर्वं खल्विदं ब्रह्मे"ति श्रुतेः 'त्रि०म०ना० १।३) स्वात्मैक्येन सर्वविज्ञानात्मिका ब्रह्मविद्या ययाक्षरब्रह्माधिगमः स्यात् । तथा च श्रुतिः—

"अथ परा यदक्षरमधिगम्यते—यत्तत् "अद्रेश्यमग्राह्यमगोत्रमवर्णम-चक्षुःश्रोत्रं तदपाणिपादम् । नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यत् परिपश्यन्ति धीराः" ॥ (मुण्ड० १।१।६)

इति । "येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् ।" मुण्ड १।२।१३ इति च । 'लिङ्गपुराणेऽपि'—

.........। पराक्षरमिति स्थितम् ।
तददृश्यं तदग्राह्यमगोत्रं तदवर्णकम् ॥

इति । अथ च कतिचित्त्रिकार्थानुयायिनः परां विद्यामुन्मनाशक्तिरूपामाहुः । यत्र विश्वस्यासूत्रणावभासननिर्माणाद्यनन्तशाखाभेदखचितत्वेऽपि ... स्वातन्त्र्यशक्त्यवभासात्मतयावस्थितेरक्रमेण ज्ञानमुत्पद्यते, यतो मायान्तावधि-कात्मतत्त्वोपरिष्टाद्विद्याख्यातत्त्वाच्छुद्धविद्यादिशक्त्यन्ताध्वव्यापकादप्यन्या, अतो-ऽस्याः परत्वम् । यल्लाभेऽसङ्कुचितपूर्ण... [illegible]

"ओं हं संविन्मयोऽहमस्मि" । 'नाहमस्मि न चान्योऽस्मि ध्येयं नात्र न विद्यते ।

आनन्दपदसंलीनं मनः समरसीगतम्' ।।

इत्याकाशीयधारणया परमाकाशे कल्पनातीते सर्वं विलीनं विभाव्य परमानन्दमयमात्मानं सञ्चिन्त्य ततो दिव्यदेहावतरणाय विद्यापद्मोपरि ऊर्ध्वरेचकक्रमेणात्मानं दिव्यां मूर्तिमवतार्य

"रक्तपद्मनिभां देवीं बालार्ककिरणारुणाम्"

इत्युक्तनीत्या सकलीकृतौ दिव्यमूर्तिसाकल्यकरणे च श्यामां श्यामवर्णां षोडशवार्षिकीमेव ध्यानरसंवद्धे हि श्यामवर्णत्वम् । तथा घनस्तनतटां पीनकुचभारां अथवा सकलतया कलातत्त्वोत्तरक्षितितत्त्वपर्यन्तैस्त्रिंशत्तत्त्वैर्वर्तते सकलं स्थूलं शरीरं तत्कृतौ, सम्पूर्णाः कला मुखाद्यवयवास्तत्कृतौ इति वा । कला नवावरणगता आवरणदेव्यो रश्मिरूपास्ताभिः सह वर्तते या मध्ये बैन्दवासनस्था मूर्तिस्तत्कृतौ वा, तयोर्ध्वाम्नायक्रमे दण्डिमुण्डिभङ्ग्या सकलीकरणमिति वा । हे अम्ब ! एवं ध्यायन्तः साधका जगतां तद्वर्तिनां जनानां गुरवो मान्या उपदेष्टारश्च भवन्त्येव ।

एवोऽवधारणे तदुक्तं 'विरूपाक्षपादैः'—

कालाग्निकोटिदीप्तां दाहे पाशोशच्चयस्य पटुतृप्त्यै ।
अमृतौघवृष्टिमूर्ति स्मर शक्तिं भव गुरुर्जगताम् ।।

इति, अनुग्राहिकायास्तव गुरुमूर्तेर्ध्यायिनां सकलीकरणे त्वदात्मसामरस्यसमावेशात् परशिवतालाभोपायासादने सति जनानुजिघृक्षाव्यापारक्षमत्वं किल सम्भाव्यत एवातएव गुरुत्वसम्पत्तेः सार्थक्यम् । तदुक्तम्—'गुरुरुपायः । शि.सू. (२।६।५९) 'विज्ञानभैरवेऽपि'—

'न वह्नेर्दाहिका शक्तिर्व्यतिरिक्ता विभाव्यते ।
केवलं ज्ञानसत्तायां प्रारम्भोऽयं प्रवेशने ।। (१९)
शक्त्यवस्थाप्रविष्टस्य निर्विभागेन भावना ।
तदासौ शिवरूपी स्याच्छैवी मुखमिहोच्यते ।। (२०)
यथालोकेन दीपस्य किरणैर्भास्करस्य वा ।
ज्ञायते दिग्विभागादि [illegible]

इति ।। ३० ।।

एवं सूचितसामरस्यव्यापारेणैव देवीं संविन्मयीं गुरुमूर्तित्वेन परामृशं-स्तद्विषयान् परेषां विकल्पानभिधत्ते—

विद्यां परां कतिचिदम्बरमम्ब ! केचिद्-
आनन्दमेव कतिचित्कतिचिच्च मायाम् ।
त्वां विश्वमाहुरपरे वयमामनामः
साक्षादपारकरुणां गुरुमूर्तिमेव ।। ३१ ।।

हे अम्ब ! कतिचिदौपनिषदास्त्वां परां विद्यामाहुर्वदन्ति, विद्यते ज्ञायते लभ्यते विचार्यते च स्वात्मरूपः परमशिवोऽनयेति कृत्वा विद्या । साचोपनिषत्सु परापर-रूपेण द्विधोच्यते, तत्र परा "सर्वं खल्विदं ब्रह्मे"ति श्रुतेः (त्रि०म०ना० १।३) स्वात्मैक्येन सर्वविज्ञानात्मिका ब्रह्मविद्या ययाक्षरब्रह्माधिगमः स्यात् । तथा च श्रुतिः—

"अथ परा यदक्षरमधिगम्यते—यत्तत् "अद्रेश्यमग्राह्यमगोत्रमवर्णम-चक्षुःश्रोत्रं तदपाणिपादम् । नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यत् परिपश्यन्ति धीराः" ।। (मुण्ड० १।१।६)

इति । "येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् ।" मुण्ड १।२।१३ इति च । 'लिङ्गपुराणेऽपि'—

............ पराक्षरमिति स्थितम् ।
तदद्रश्यं तदग्राह्यमगोत्रं तदवर्णकम् ।।

इति । अथ च कतिचित्त्रिकार्थानुयायिनः परां विद्यामुन्मनाशदितरूपामाहुः । यत्र विश्वस्यासूत्रणावभासननिर्माणाद्यनन्तशाखाभेदखचितत्वेऽपि सदं दितानन्दघन-स्वातन्त्र्यशक्त्यवभासात्मतयावस्थितेरक्रमेण ज्ञानमुत्पद्यते, यतो मायान्तावधि-कात्मतत्त्वोपरिष्टाद्विद्याख्यात्तत्त्वशुद्धविद्यादिशक्त[illegible]व्यापकादप्यन्या अतो-

तस्मात् सा च परा विद्या यस्मादन्या न विद्यते ।
वेदनानादिधर्मस्य परमात्मत्वबोधना ॥
वर्जनापरमात्मत्वे तस्माद्विद्येति चोच्यते ।
तत्रस्थो व्यञ्जयेत्तेजः परं परमकारणम् ॥
परस्मिंस्तेजसि व्यक्ते तत्रस्थः शिवतां व्रजेत् । ४।३९५-९७

इति । यद्वा परां मायातत्त्वान्ताशुद्धाध्वोत्तीर्णां विद्यामहमिदन्ताधियोः सामानाधिकरण्यात्मशुद्धविद्यामाहुः । यतोऽत्र बहिष्कृतानां भावानां स्वाहन्तायामेव निमज्जनं शुद्धिः । ततः स्वस्फुरत्ताप्रत्यभिज्ञापनात् संवित्स्वातन्त्र्यशक्तिः शुद्धविद्येत्यर्थः । तदुक्तं 'श्रीमहेश्वरानन्दपादैः'—

*ज्ञाता स आत्मा ज्ञेयस्वभावश्च लोकव्यवहारः ।
एकरसां संसृष्टिं यत्रगतो सा खलु निस्तुषा विद्या ॥ (१६)

इति । 'प्रत्यभिज्ञायामपि'— 'सामानाधिकरण्यञ्च सद्विद्याहमिदं धियोः ।'' (३।१।३) इति । यत्र स्थितस्य माहेश्वर्यावाप्तिप्रसिद्धिः । तदुक्तं शिव सूत्रेषु—

'शुद्धविद्योदयाच्चक्रेशत्वसिद्धि' । ।(१।२१) इति । एतद्प्राग्वार्तिकेन प्रपञ्चितं नेह विविच्यते । यद्वा, विद्यां परां सौभाग्यसुन्दरीरूपामित्यर्थः प्रतिपादितस्य निर्णीतम् । तदुक्तं 'श्रीक्रमे'—

सौभाग्यं कथयिष्यामि शृणुष्वैकमनाः प्रिये ! ।
शक्तिः स्वयम्भूः शम्भुश्च शक्रश्च भुवनेश्वरी ॥
'शिवो मादनरुद्रेन्द्रमहामाया ततःपरम् ।
कामः शिवस्ततो ब्रह्मा इन्द्रश्च भुवनेश्वरी ॥
एषा तु परमा विद्या सुन्दरी सुभगोदया ।

इति । यद्वा—

तृतीयं ब्रह्मसुश्रोणि ! हृदयं भैरवात्मनः ।

*ज्ञातृत्वधर्मा आत्मा ।

इति श्रीत्रिशिकोक्तनीत्यां निर्णीतस्वरूपा श्रीपराविद्या । स्त्रीदैवत्यो मन्त्रविशेषो भैरवहृदयात्मत्वेनागमेषूद्घोषितः । तदुक्तं—

स्त्रीदेवतास्तु विद्याःस्युर्मन्त्राः पुंदेवता मताः ।

इति । तत्रैव विश्वस्य बीजात्मना मयूराण्डरसन्यायेनावस्थानात् । तदुक्त 'स्त्रीशिकाशास्त्रे'—

यथा न्यग्रोधबीजस्थः शक्तिरूपो महाद्रुमः ।
तथा हृदयबीजस्थं विश्वमेतच्चराचरम् ॥ (२४)

इति । तद्व्याप्तिप्रदर्शनमपि तत्रैव—

[1]सार्णेनाण्डत्रयंव्याप्तं त्रिशूलेन चतुर्थकम् ।
सर्वातीतं विसर्गेण पराया व्याप्तिरिष्यते ॥ ४।२५)

इति । तथा केचिदभावब्रह्मवादिनो माध्यमिकाश्च "असदेवेदमग्र आसीत्" इति (छांदो० ३।१६।१) इति श्रुतेस्त्वामम्बरं शून्यमभावब्रह्मस्वभावमाहुः । अथ चाम्बरं चिदाकाशरूपं सर्वभावसुनिर्भरं त्वामाहुः । न तु शून्यरूपं तुच्छं, तथात्वे तस्माद् भावोत्पत्तिविरोधप्रसङ्गः स्यात् । तदुक्तम्—

'अशून्यं शून्यमित्युक्तं शून्यं चाभाव उच्यते ।
देव्यभावः समुद्दिष्टो यत्र भावाः क्षयंगताः, ॥

इति । किञ्चाम्बरशब्देन शून्यार्थकेनोन्मना शक्तिरप्यभिधीयते, 'शून्योच्चाराद् भवेच्छिवः' इत्यत्राचार्यैस्तथैव व्याख्यातत्वात्तद्रूपामित्यर्थः । तथा "आनन्दं ब्राह्मणो रूपमि" त्युक्तयानन्दमानन्दशक्तिशिवशक्तियामलात्मकं विश्वमयत्वेऽपि तदुत्तीर्णमत एव पूर्णं रूपं विश्वप्रसरादिस्थानं च । यच्छ्रुतिः :—

[2]आनन्दं ब्रह्म व्यजानात् । [3]आनन्दाद् खल्विमानि भूतानि जायन्ते आनन्देन जातानि जीवन्ति आनन्दं प्रयन्त्यभिसंविशन्ति (तैत्ति० ३।६) इति । तस्यैव चाभयधामत्वोक्ते "रानन्दं ब्रह्मणो विद्वान् न बिभेति [4]कुतश्चन" इति, श्रीतन्त्रालोकेऽपि'—

---

१. सार्णेन त्रितयं । २ आनन्दो ब्रह्मेति व्यजानात् । (तैत्ति० ३।६) ३ आनन्दाद्ध्येव । ४ कदाचन (तैत्ति० २।४) [illegible]

presented at the proceedings of the

"तयोर्यद्यामलं रूपं स संघट्ट इति स्मृतः ।
आनन्दशक्तिः सैवोक्ता यतो विश्वं विसृज्यते ॥"

परा परात्परं तत्त्वं सैषा देवी निगद्यते । इति।
"आधारमानन्दमखण्डबोधं यस्मिल्लयं याति पुरत्रयं च" ।

इत्येतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति, इत्यादि प्राक् प्रपञ्चितम् । साचानन्दशक्तिर्महाप्रकाशात्मनो भैरवस्य स्वभावभूता विमर्शात्मिका जीवितम् । विमर्शशक्तिरेवानन्दशक्तिरैश्वर्यापरपर्याया, अन्यथा निर्विमर्शस्यानैश्वर्यजाड्यापत्तेः तदुक्तं 'प्रत्यभिज्ञायाम्'—

स्वभावमवभासस्य विमर्शं विदुरन्यथा ।
प्रकाशोऽर्थोपरक्तोऽपि स्फटिकादिजडोपमः ॥ (१।५।११)
चितिः प्रत्यवमर्शात्मा परा वाक् स्वरसोदिता ।
स्वातन्त्र्यमेतन्मुख्यं तदैश्वर्यं परमात्मनः ॥ (१।५।१३)

इत्यादि । तथा कतिचिन्मायां परमेश्वरस्य स्वरूपगोपनलीलां शक्तिमाहुः । माया हि स्फुटस्य प्रसिद्धतरस्याप्यप्रकटीकरणानुकूलातिदुर्घटकारिणी शक्तिः । तदुक्तं 'तन्त्रालोके'—

किन्तु दुर्घटकारित्वात् स्वातन्त्र्यान्निर्मलादसौ ।
स्वात्मप्रच्छादनक्रीडापण्डितः परमेश्वरः ॥
अनावृत्ते स्वरूपेऽपि यदात्माच्छादनं विभोः ।
सैव माया यतो भेद एतावान् विश्ववृत्तिकः ॥।

परमार्थसंग्रहेऽपि

परमं यत् स्वातन्त्र्यं दुर्घटसम्पादनं महेशस्य ।
देवी मायाशक्तिः स्वात्मावरणं शिवस्यैतत् ॥

इति, शचीमतेऽपि

'स्वातन्त्र्यशक्तिर्मेऽसि त्वमतिदुर्घटकारिणी ।
मायेति कीर्त्यसे देवि ! भर्तुर्मे वैश्वरूप्यदा ॥

इति । स्तोत्रावलावपि—

न च विभिन्नमसृज्यत किञ्चिद-
स्त्यथ सुखेतरदत्र विनिर्मितम् ।
अथ च दुःखि च भेदि च सर्वथा
घ्यसमविस्मयधाम ! नमोऽस्तु ते ॥' (१८।१८) इति ।

'महार्थमञ्जर्यामपि'—

एकरसे स्वभावे उद्भावयन्ती विकल्पशिल्पानि ।
मायेति विश्वपतेः परमस्वतन्त्रस्य मोहिनी शक्तिः ॥ १७ इति ।

'देवीपुराणेऽपि'—

'विचित्रकार्यकरणा अचिन्तितफलप्रदा ।
स्वप्नेन्द्रजालवल्लोके माया तेन प्रकीर्तिता ॥

इत्युक्तम् । एतदेव वराहपुराणे विस्तरेण पृथिवीं प्रति विष्णुरवोचत्

'पर्जन्यो वर्षति तत्र जलपूरश्च जायते ।
दिशो निर्जलतां यान्ति सैषा माया मम प्रिये ! ॥
सोमोऽपक्षीयते पक्षे पक्षे चापि विवर्धते ।
अमायां दृश्यते नैव मायेयं मम सुन्दरि ! ॥

इत्यादि—

'मम मायाबलं ह्येतद्येन तिष्ठाम्यहं जले ।
प्रजापतिं च रुद्रं च सृजामि च हरामि च ॥

इत्यन्तं वितत्यातिदुर्घटकार्यकर्तृत्वं मायायं प्रतिपादितम्। यत्तु सदसदनिर्वाच्यं मायाया लक्षणं कैश्चिदद्वयशासनस्थैःकृतं तन्नोपपद्यते, सदसतोन्तदुभयवैलक्षण्य-

स्याप्यन्योन्यं विरोधावहत्वात् स्फुटमाभासमानस्य विश्ववैचित्र्यस्य व्याघातप्रसक्ते, अनिर्वाच्यस्य वैचित्र्याधानविरोधाच्च, अत एव तेषां विवर्तवादोऽप्यनुपपन्नस्तच्च प्राक् प्रदर्शितमित्यलं पल्लवितेन । अथ च 'मायाविमोहिनी नामे' त्युक्तचाधर- दर्शनस्थानां प्राकृतजनानां सङ्कोचावभासप्रवणतयाऽद्वैतावभासपरिपूर्णस्वाहन्ता- वमर्शवैधुर्येण विमोहजननी पारमेश्वरी शक्तिः । उक्तं 'कूर्मपुराणे' शिवेन—

'इयं सा परमा शक्तिर्मन्मयी ब्रह्मरूपिणी ।
माया मम प्रियानन्ता ययेदं मोहितं जगत् ॥
अनयैव जगत् सर्वं सदेवासुरमानुषम् ।
मोहयामि द्विजश्रेष्ठाः सृजामि विसृजामि च ॥

इति देव्यप्यत्रैव हिमवन्तं प्रत्याह—

यानि शास्त्राणि दृश्यन्ते लोकेऽस्मिन् विविधानि तु ।
श्रुतिस्मृतिविरुद्धानि द्वैतवादरतानि तु ॥
कापालं भैरवं चैव शाकलं गौतमं मतम् ।
एवंविधानि चान्यानि मोहनार्थानि तानि तु ॥
ये कुशास्त्राभियोगेन मोहयन्तीव मानवान् ।
मया सृष्टानि शास्त्राणि मोहायैषां भवान्तरे ॥

इति । 'सूतसंहितायामपि'—

'प्रसादहीनाः पापिष्ठा मोहिता मायया जनाः ।
नैव जानन्ति देवेशं जन्मनाशादिपीडिताः ॥

कतिचिच्च पौराणिका इत्यत्र पक्षे योज्यम् । तथा पदार्थद्वयवादिनस्त्वां विश्वं विश्वमयं रूपमाहुः ।

शक्तिश्च शक्तिमांश्चैव पदार्थद्वयमुच्यते ।
शक्तयोऽस्य जगत् कृत्स्नं शक्तिमांस्तु महेश्वरः ॥

इति श्रीतन्त्रमङ्गलादृष्ट्या शिवशक्तिलक्षणं पदार्थयुगलम् । तत्र विश्वोत्तीर्णः शिवो विश्वमयो शक्तिरेतदनयोर्विच्छिन्नं रूपं, विच्छिद्यमानत्वे...

सङ्कोचाभासम् । अत एव द्वितीयं रूपं सदाशिवादिधरण्यन्तेन प्रसरात्मना जगल्लक्षणेन गृहीतवैचित्र्यं तथा तथावभासते । तेन शाक्तस्फारत्वाद्विश्वं शक्तिरेव कार्यकारणपरम्पराया अपि मूलकारणाभिन्नत्वात् । यद्वा पारमेश्वरीशक्तिर्मायाख्येति त्वां कतिचित् प्रतिपादयन्ति: यतोऽतिदुर्घटकारित्वं स्वरूपगोपनं परमेश्वरः करोति; तत एवेयान् भेदोऽभेदविचित्रो ग्राह्यग्राहकाद्यवभासो विलसितस्तदेव विश्वं मायाजन्यं कार्यरूपं, कार्यकारणयोरभेदोपचारादिति केचित् त्वां विश्वमिदन्ताभासात्मकमाहुः । वयं तु श्रीसुन्दरीप्रसादपात्रभूताः । यत् "साक्षादपरोक्षाद् ब्रह्म" इति श्रुतेः (बृह० ३।४।२,२) साक्षादपरोक्षामव्यवहितां गुरुमूर्तिं "गुरुर्वा पारमेश्वर्यनुग्राहिका शक्तिः" इति श्रीक्षेमराजोक्तेर्गुरुस्वरूपभूतामपारकरुणामतिकारुण्यैकरसनिर्भरां तद्गतां वा शक्तिं संसाराब्धितारिणीमामनामो ब्रूमः । तदुक्तं 'योगिनीहृदये'—

'त्वामिच्छाविग्रहां देवीं गुरुरूपां विभावयेत् ।' (३।११८)

इति । 'गुरुरुपायः' (२।६।५६) इति श्रीशिवसूत्रनीत्या मन्त्रमुद्रावीर्यासादनमपि विना गुरुप्रसादाद् दुर्घटमिति तत्प्राप्त्यै गुरुरेव सर्वत्रोपायत्वेनोद्घोष्यते । यदुक्तं 'मालिनीविजये'——

शक्तिचक्रं तदेवोक्तं गुरुवक्त्रं तदुच्यते ।

इति । 'त्रिशिरोभैरवे'ऽपि——गुरोर्गुरुतराशक्तिर्गुरुवक्त्रगता भवेत् ।

अन्यत्रापि—— न चैतदप्रसन्नेन शङ्करेणोपदिश्यते ।

इति । श्रीपूर्वेऽपि——

रुद्रशक्तिसमाविष्टः स यियासुः शिवेच्छया ।
भुक्तिमुक्तिप्रसिद्ध्यर्थं नीयते सद्गुरुं प्रति ॥ ( ४४ )

इति च । गुरुमूर्तिमाश्रित्यैव हि भगवत्या अनुग्राह्योऽर्वशेषपाशौघदलनं दीक्षादिना क्रियते । तदुक्तम् ।

'यस्मान्महेश्वरः साक्षात् कृत्वा मानुषविग्रहम् ।

इति । तथा— 

'गुरुशिष्यपदे स्थित्वा स्वयं देवः सदाशिवः ।
पूर्वोत्तरपदैर्वाक्यैस्तन्त्रं समवतारयत् ॥

इति । अथवा अपारकरुणा गुरुमूर्तिः परमकारुणिकी आदिनाथरूपा सैव कामकामेश्वरीरूपदिव्यदम्पतीप्रमुखं दिव्यसिद्धमानवौघादिक्रमतोऽवतीर्य गुरुमण्डलमूर्त्यानुग्राह्यान् कतिचनानुगृह्णातीत्यर्थः ॥ स च क्रमो यथा— कृतादियुगक्रमेण परमशिवः परमगुरुरादिनाथः कामेश्वर्याः सर्वोत्तरसारभूतं रहस्यतन्त्रं प्रवर्तयितुकामः—

'महामध्यञ्च चक्रस्य महानन्दात्मकं पुनः ।
अनुत्तरविमर्शैकसारं संविन्मयं भजे ॥

इत्युक्तया प्रकाशानन्दसारसंविन्मयोड्यानादिपीठान्यास्थाय श्रीचर्यानन्दनाथादिनामान्युद्वहन् स्वाभिन्नायै श्रीमहात्रिपुरसुन्दर्यादरूपधारिण्यै पराभट्टारिकायै [illegible] राजलोपामुद्रासन्तानोभयविधामुपदिदेश । तदनु तस्याः सकाशादेवेयं विद्याखिलाभीष्टदायिनी दिव्यौघादिगुरुपरिपाट्या प्रावर्तत । तस्माद्गुरुमूर्तिरसावेव मुख्या । तत्रेदानीं कलौ विद्यावतारक्रमस्तु—आदिनाथो गृहीतमित्रेशसंज्ञः कलियुगगुरुः पूर्णगिरिपीठस्थश्रीभगमालिनीभूमिकां बिभ्रत्यै स्वशक्त्यै उभयविधां विद्यामुपादिक्षत् । सापि लोपामुद्रामगस्त्यञ्च मित्रेशद्वारानुजग्राह । तस्मात् प्राधान्येनेदं सन्तानद्वयमेव लोके प्रवृत्तचणमिति । तदुक्तं 'कामकलाविलासे'—

आसीनः श्रीपीठे कृतयुगकाले शिवो गुर्विद्याम्* ।
तस्यै ददौ स्वशक्त्यै कामेश्वर्यै विमर्शरूपिण्यै ॥
सेयाय मित्रसंज्ञां स्थानेशा ज्येष्ठमध्यबालाख्या ।
चित्प्राणविषयभूता त्रेतायुगादिकारणत्रिगुरून् ॥
बीजत्रितयाधिपतीन् परीक्ष्य विद्यां प्रकाशयामास । (५१, - ५३)

इति । किञ्च गुरूणां मतद्वयोक्तानां कुलविद्यावतारदीक्षागुरूणां दिव्यौघादिभेदवतां स्वपारम्पर्यगुरूणां च मूर्ति प्रातःकृत्यादौ सहस्रदलपङ्कजस्थतया ध्येया-

---

*गुरुः शिवो विद्याम् । इति पाठान्तरम्

मामनाम: । अथ च गुरोरादिनाथस्य परमशिवस्य मूर्ति स्वातन्त्र्यशक्तिमपारकरुणामन्त्यकृत्यैकपरमार्थामित्यर्थः । यदाहु'र्महेश्वरानन्दपादा':—

'मूर्च्छनान्मोहरूपात् समुच्छ्रयणरूपाद्वा मूर्तिरिदम् । तच्चान्तर्बहिरहन्तेदन्ताद्वितयस्फुरणानुगुण्यात्' । तत्र यदहन्ताया समुच्छ्रायस्तदेवेदन्ताया न्यग्भावरूपो मोहो भवति, यदा पुनरिदन्तायाः समुच्छ्रायस्तदाहन्ताया उत्कर्षरूपो मोह इति द्वयमप्येकार्थमेव । प्रमातृवह्लिरूपस्य परमप्रकाशस्य परभैरवसंवित्पर्यन्तमुत्कर्षः पाषाणादिजडसंवित्पर्यन्तं न्यूनोभावश्चेति महती स्वातन्त्र्यशक्तिर्मूर्तिशब्देनोच्यते ।

अपिच गुरोः सत्सम्प्रदायप्रवर्तकस्य श्रीदक्षिणामूर्त्याख्यस्य मूर्तिं स्वरूपात्मिकां । तदुक्तं श्रीशङ्कराचार्यपादैः— 'तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये' इति । यद्वा—स्वाविभेदानुसारपरमेश्वरस्वभावमहारावशक्त्यात्मा विमर्श एव पारमार्थ्येन गुरुनाथमूर्तिः तदुक्तं 'महानयप्रकाशे'—

'वस्तुतस्त्वस्वरोल्लासप्रथनोच्छूनतात्मकः ।
यो विभाति महानादस्तमजं बैशिकं भजे ॥

इति । तथा—

'योन्तर्विश्वं सटितिकलयन्नग्रचक्रेश्वरीभिः
स्वात्मैकात्म्यं गमयति निरानन्दयानाधिरूढैः ।
यः पूर्णत्वाद्बहिरपि तथैवोच्छलत्स्यात्मरूपो
बोधोल्लासो जयति स गुरुः कोऽप्यपूर्वो रहस्यः ॥

इत्याद्यप्यन्यद् गुरुरहस्यं सद्गुरुप्रसादादधिगन्तव्यमित्यलमतिवैतत्येनेति ॥ ३१ ॥

इदानीं ग्रन्थकृत् स्वस्य सगुणे एवालम्बने मनसो रतिं सूचयन् प्रागुक्तगुरुमूर्तेरपि ध्यानप्रदर्शनपुरःसरं सान्निध्यप्रार्थनया ग्रन्थमुपसंहरति—

किमिह बहुभिरुक्तैस्त्वत्स्वरूपं परं नः
सकलभुवनमातः ! सन्ततं सन्निधत्ताम् ॥ ३२ ॥

इति श्रीधर्माचार्यकृतौ पञ्चस्तवयामरबस्तवश्चतुर्थः ॥ ४ ॥

हे सकलभुवनमातः ? समस्तत्रैलोक्यजननि । किमिह स्तुतौ बहुभिरुक्तैर्भूयोभिर्वचोभिरत्युक्तिभिरलमित्यर्थः । किञ्च परं केवलं । 'परः श्रेष्ठारिदूरान्योत्तरे क्लीबं तु केवले' इति मेदिनो, त्वत्स्वरूपं तव मूर्तिर्वक्ष्यमाणलक्षणा सन्ततमनारतं नैरन्तर्येणेत्यर्थः नोऽस्माकं त्वद्भक्तानां सन्निधत्तां सन्निहिता भवतु, प्रार्थनायां लोट् । अत्रामन्त्रणशब्देनेदमावेद्यते—कदापि मातात्मजानामसन्निहिता न भवति । तत्पोषणाद्यवेक्षणादेर्मातृपारतन्त्र्यादतो विवृताशेषभुवनावेक्षादिभारायास्तवास्मत् सन्निधिमात्रकार्ये कियान् प्रयासः सह्य इति । सन्ततमित्यस्यायमभिप्रायः—यत् सर्वस्य प्राणिमात्रस्य क्षणिकं त्वद् दर्शनमस्त्येवाशेषसंविदां चिद्भित्त्याश्रयतयैव स्फुरणात्, अतस्तस्थैर्यं प्रार्थनेति ।

अनेनैवाशयेन 'श्रीमदुत्पलदेवपादा' अप्याहुः—

'दर्शनपथमुपयातोऽप्यपसरसि कुतो ममेश ! भृत्यस्य ।
क्षणमात्रकमिह न भवसि कस्य न जन्तोर्दृशोर्विषयः ॥ (शि०स्तो ७।१६)

इति । कीदृशं तदित्याह कुवलयदलवदुत्पलपत्रवन्नीलं श्यामवर्णं, तथा बर्बरा आभुग्नह्रस्वाग्राः स्निग्धाश्चिक्कणाः केशाः कुन्तला यस्य तद्बर्बरस्निग्धकेशं कुञ्चितमसृणकुन्तलम् । तथा पृथुतरयोरतिपीवरयोः कुचयोर्भरेण गौरवेणाक्रान्तमभिभूतमाभुग्नं च तत् कान्तं रम्यं च तदवलग्नं मध्यं यस्य तादृशम् । आक्लान्तेति पाठे आम्लानमानतमित्यर्थः । अत्र सम्बोधनपदाच्छक्तिकूटोद्धारः सुगमः । तदधिष्टातृदेवतास्वरूपानुगण्येन विशेषणानि समुपन्यस्तानीति धीनैपुण्यशालिभिरूह्यम् ।

एवमेतेन निगमनरूपस्तुतिश्लोकेन स्तुतिकर्तुः सकलीकृतौ चैत्यत्रेयमेव गौरवीमूर्तिर्ध्यानादावप्यभिप्रेतेति द्योत्यते । एवंसमनन्तरोक्तपद्येऽपि सगुणैव गुरुमूर्तिर्विवक्षिताऽतो निर्गुणपक्षेऽर्थो न विवृत इत्यपि ज्ञेयम् ॥ ३२ ॥

इति श्रीमहामाहेश्वर पं० हरभट्टशास्त्रिकृतपञ्चस्तवीटीकायां चतुर्थस्तवः ॥४॥





अम्बायाः शरणं सदाखिलविपद्दौर्भाग्यनिर्धूननं
नो शक्यं खलु यद्विना स्वयतनैः पारं भवाब्धेः परम्
गन्तुं स्तूयत एव यत्र जननी सापूर्वसौभाग्यदा
तस्मिन् पूर्तिमगादिदं विवरणं सौम्यं चतुर्थे स्तवे ॥



